इस भूमि में अवस्थान करने के समय दश पारमिताओं में प्रणिधान पारमिता का अतिशय प्राधान्य रहता है[1]।

## साधुमती ( ९ )

भाविबोधिसत्त्व अपने आध्यात्मिक–पक्ष में और भी उन्नति कर रहे हैं। पूर्व–पूर्व भूमि पर अधिकार की सफलता मिलने पर भी मन में किसी प्रकार का आलस्य एवं औदासीन्य नहीं है। वे आठवीं भूमिका अतिक्रमण कर नवमी भूमि पर आरोहण कर रहे हैं। इस भूमि का नाम साधुमती है। साधुमती इस नाम से ही इस भूमि का स्वरूप क्या है–यह सुस्पष्ट हो जाता है। जो बोधिसत्त्व इस भूमि में अवस्थान करते हैं वे कुशल–अकुशल आदि की निष्पत्ति प्रकार को अवितथरूप से अवगत करने में समर्थ होते हैं[2]। वे श्रावक प्रत्येक बुद्ध, बोधिसत्त्व एवं तथागत यान के प्रतिपाद्य धर्म के स्वरूप से अवगत होते हैं। वे सभी प्राणिओं में बुद्ध–धर्म का प्रचार करते हैं। सभी प्राणिओं के चित्तगत–वैचित्र्य का उनके सम्मुख प्रकाश हो जाता है[3]। वे ( १ ) धर्मप्रतिसंविद् ( विशेषज्ञान ) ( २ ) अर्थप्रतिसंविद्, ( ३ ) निरुक्तिप्रतिसंविद् ( ४ ) प्रतिमानप्रतिसंविद्[4] इन चार प्रकार की प्रतिसंविद ( विशेषज्ञान ) लाभ करते हैं। इस अवस्था में बोधिसत्त्व की इच्छा सभी सीमाओं का अंतिक्रम कर विद्यमान रहती है। वे जो इच्छा करते हैं वही होता है[5]। इस भूमि में उनकी दश प्रकार की पारमिताओं में बल–पारमिता अधिक उत्कर्षयुक्त रहती है[6]।

## धर्ममेघा ( १० )

भाविबोधिसत्त्व नवमी भूमिका अतिक्रमण कर दशमी भूमि में आगये हैं। इस भूमि का नाम धर्ममेघा[7] है। इस भूमि में बोधिसत्त्व विचित्र प्रकार की समाधि के

---

१ तस्य दशभ्यः पारमिताभ्यः प्रणिधानपारमिता अतिरिक्ततमा भवति द. भू. सू. पृ. ४८

२ सोऽस्यां साधुमत्यां बोधिसत्त्वभूमौ स्थितः कुशलाकुशलाव्याकृतधर्माभिसंस्कारं च यथाभूतं प्रजानाति। द. भू. सू. पृ. ४९

३ स सत्त्वानां चित्तवैमात्रतां च यथाभूतं प्रजानाति। द. भू. सू. पृ. ४५

४ यह उल्लेख करना उचित होगा कि इन प्रतिसंविदों के विभिन्न-प्रकार के उपयोग को दशभूमिकसूत्र के रचयिताने विस्तृतरूप से प्रदर्शित किया है, उसका कुछ अंश हमलोग उद्धृत करते हैं।—
"सधर्मप्रतिसंविदा स्वलक्षणं धर्माणां प्रजानाति। अर्थप्रतिसंविदा विभक्तिं धर्माणां प्रजानाति, निरुक्तिप्रतिसंविदा असंभेददेशनां धर्माणां प्रजानाति। प्रतिभानप्रतिसंविदा अनुप्रबन्धानुपच्छेदतां धर्माणां प्रजानाति। द. भू. सू. पृ. ५१
इस प्रसंग में महायानसूत्रालंकारकार ने जो कहा है वह भी उल्लेखनीय है—
"प्रतिसंविन्मतिसाधुत्वात् भूमिः साधुमती मता। महा० सूत्रा० २१।३२

५ द. भू. सू. पृ. ५२–५३

६ तस्य दशभ्यः पारमिताभ्यो बलपारमिता अतिरिक्ततमा भवति। द. भू. सू. पृ. ५४

७ यह भूमि अभिषेक-भूमि इत्यादि नाम से भी परिचित है द. भू. सू. पृ. ५५

लाभ करने में समर्थ होते हैं। इसमें दश प्रकार की समाधियां महत्त्वपूर्ण हैं[1]। अन्त में पूर्वोक्त बोधिसत्त्व की सर्वज्ञज्ञानविशेषाभिषेक[2] नामक समाधि आविर्भूत होती है बोधिसत्त्व जब इस समाधिको लाभ करते हैं तब वे महारत्नराजपद्मनामक आसन पर उपविष्टावस्था में दीख पड़ते हैं। यह पूर्वोक्त आसन अगण्य प्रकार की रश्मिओं को विकीर्ण कर दश दिशाओं को आभासित करता है। वे दृश्यग्राम का यथाभूत स्वरूप अवगत करते हैं। वे सभी प्रकार के गुह्यस्थानों[3] को अवगत करने में समर्थ होते हैं। वे दश प्रकार के बोधिसत्त्व विमोक्ष लाभ करते हैं[4]। वे अज्ञान के द्वारा उत्पादित क्लेशरूप अग्नि को धर्ममेघ वर्षण के द्वारा निर्वापित करते हैं। इसी लिए इस भूमि का नाम धर्ममेघों[5] है। इस भूमि में भी उनकी इच्छा सभी प्रकार की सीमा का लंघन कर विद्यमान है एवं अलौकिक शक्तिसम्पन्न रहती है। इस भूमि में उनको सर्वबुद्धक्षेत्रकायस्वभावसंदर्शन नामक समाधि उत्पन्न होती है। इस भूमि में उनकी ज्ञानपारमिता अधिक प्राधान्य लाभ करती है।

---

१ इन दश प्रकारकी समाधिओं का नाम इस प्रकार है—(१) विमल (२) धर्मधातु-विभक्तिप्रवेश (३) बोधिमण्डालंकारव्यूह (४) सर्वाकाररश्मिकुसुम (५) सागरगर्भ (६) सागरसमृद्धि (७) आकाशधातुविपुल (८) सर्वधर्मस्वभावविचय (९) सर्वसत्त्व-चित्तचरितानुगत (१०) प्रत्युत्पन्नसर्वबुद्धसम्मुखावस्थित। द. भू. सू. पृ. ५५

२ स तस्य सर्वज्ञज्ञानविशेषाभिषेकवतः समाधेः सह प्रतिलम्भात्तस्मिन् महारत्नराजपद्मे निषण्णः संदृश्यते। द. भू. सू. पृ. ५५

३ द. भू. सू. पृ. ५८

४ तुलनीय :—धर्ममेघाद्द्वयव्याप्तेर्धर्माकाशस्य मेघवत् महा० सूत्रा० २१।३८

५ योगसूत्रमें पतञ्जलि ने धर्ममेघ नामक समाधि का स्वरूप इस प्रकार प्रदर्शित किया है—
"प्रसंख्यानेऽप्यकुसीदस्य विवेकख्यातेर्धर्ममेघः समाधिः" ४।५९
पञ्चदशीके रचयिताने भी इस प्रकार कहा है—

धर्ममेघमिमं प्राहुः समाधिं योगवित्तमाः।
वर्षत्येष यतो धर्मामृतधारा सहस्रशः॥ १।६०



# ॥ दशभूमिकसूत्रम् ॥

## १ प्रमुदिता नाम प्रथमा भूमिः ।

एवं[1] मया श्रुतम् । एकस्मिन् समये भगवान् परनिर्मितवशवर्तिषु देवभुवनेषु R 1
विहरति स्म अचिराभिसंबुद्धो द्वितीये सप्ताहे वशवर्तिनो देवराजस्य विमाने मणिरत्नगर्भे
प्रभास्वरे प्रासादे महता बोधिसत्त्वगणेन सार्धं सर्वैरवैवर्तिकैरेकजातिप्रतिबद्धैः । यदुत 5
अनुत्तरायां सम्यक्संबोधावन्योन्यलोकधातुसंनिपतितैः । सर्वैः सर्वबोधिसत्त्वज्ञानविषयगोचर-
प्रतिलब्धविहारिभिः सर्वतथागतज्ञानविषयप्रवेशावताराप्रतिप्रस्रब्धगोचरैः सर्वजगत्परिपाचन-
विनययथाकालक्षणाधिष्ठानसर्वक्रियासंदर्शनकुशलैः सर्वबोधिसत्त्वप्रणिधानाभिनिर्हाराप्रति-
प्रस्रब्धगोचरैः कल्पार्थक्षेत्रचर्यासंवासिभिः सर्वबोधिसत्त्वपुण्यज्ञानर्द्धिसंभारसुपरिपूर्णाक्षयसर्व-
जगदुपजीव्यताप्रतिपन्नैः सर्वबोधिसत्त्वप्रज्ञोपायपरमपारमिताप्राप्तैः संसारनिर्वाणमुखसंदर्शन- 10
कुशलैः बोधिसत्त्वचर्योपादानाव्यवच्छिन्नैः सर्वबोधिसत्त्वध्यानविमोक्षसमाधिसमापत्त्यभिज्ञाज्ञान-
विक्रीडिताभिज्ञासर्वक्रियासंदर्शनकुशलैः सर्वबोधिसत्त्वर्द्धिबलवशिताप्राप्तानभिसंस्कारचित्त-
क्षणसर्वतथागतपर्षन्मण्डलोपसंक्रमणपूर्वंगमकथापुरुषैः सर्वतथागतधर्मचक्रसंधारणविपुलबुद्ध-
पूजोपस्थानाभ्युत्थितैः सर्वबोधिसत्त्वकर्मसमादानसमताप्रयोगसर्वलोकधातुकायप्रतिभासप्राप्तैः R 2
सर्वधर्मधात्वसङ्गस्वररुतघोषानुरवितसर्वत्र्यध्वासङ्गचित्तज्ञानविषयस्फरणैः सर्वबोधिसत्त्वगुण- 15
प्रतिपत्तिसुपरिपूर्णानभिलाप्यकल्पाधिष्ठानसंप्रकाशनापरिक्षीणगुणवर्णनिर्देशकैः । यदिदम्—
वज्रगर्भेण च बोधिसत्त्वेन महासत्त्वेन । रत्नगर्भेण च । पद्मगर्भेण च । श्रीगर्भेण च ।
पद्मश्रीगर्भेण च । आदित्यगर्भेण च । सूर्यगर्भेण च । क्षितिगर्भेण च । शशिविमलगर्भेण
च । सर्वव्यूहालंकारप्रतिभाससंदर्शनगर्भेण च । ज्ञानवैरोचनगर्भेण च । रुचिरश्रीगर्भेण च ।
चन्दनश्रीगर्भेण च । पुष्पश्रीगर्भेण च । कुसुमश्रीगर्भेण च । उत्पलश्रीगर्भेण च । 20
देवश्रीगर्भेण च । पुण्यश्रीगर्भेण च । अनावरणज्ञानविशुद्धिगर्भेण च । गुणश्रीगर्भेण च ।
नारायणश्रीगर्भेण च । अमलगर्भेण च । विमलगर्भेण च । विचित्रप्रतिभानालंकारगर्भेण च ।
महारश्मिजालावभासगर्भेण च । विमलप्रभासश्रीतेजोराजगर्भेण च । सर्वलक्षणप्रतिमण्डित-
विशुद्धिश्रीगर्भेण च । वज्रार्चिःश्रीवत्सालंकारगर्भेण च । ज्योतिर्ज्वलनार्चिःश्रीगर्भेण च ।
नक्षत्रराजप्रभावभासगर्भेण च । गगनकोशानावरणज्ञानगर्भेण च । अनावरणस्वरमण्डल- 25
मधुरनिर्घोषगर्भेण च । धारणीमुखसर्वजगत्प्रणिधिसंधारणगर्भेण च । सागरव्यूहगर्भेण च ।

---

[1] Before एवं, all Mss. read the following stanza which, of course, is not part of the text:

यस्मिन् पारमिता दशोत्तमगुणास्तैस्तैर्नयैः सूचिताः
सर्वज्ञेन जगद्धिताय दश च प्रख्यापिता भूमयः ।
उच्छेदध्रुववर्जिता च विमला प्रोक्ता गतिर्मध्यमा
तत्सूत्रं दशभूमिकं निगदितं शृण्वन्तु बोध्यर्थिनः ॥

मेरुश्रीगर्भेण च । सर्वगुणविशुद्धिगर्भेण च । तथागतश्रीगर्भेण च । बुद्धश्रीगर्भेण च । विमुक्तिचन्द्रेण च बोधिसत्त्वेन महासत्त्वेन । एवंप्रमुखैरपरिमाणाप्रमेयासंख्येयाचिन्त्या-तुल्यामाप्यानन्तापर्यन्तासीमाप्राप्तानभिलाप्यानभिलाप्यैर्बोधिसत्त्वैर्महासत्त्वैः सार्धं नानाबुद्ध-क्षेत्रसंनिपतितैर्वज्रगर्भबोधिसत्त्वपूर्वंगमैः ॥

5 अथ खलु वज्रगर्भो बोधिसत्त्वस्तस्यां वेलायां बुद्धानुभावेन महायानप्रभासं नाम बोधिसत्त्वसमाधिं समापद्यते स्म । समनन्तरसमापन्नश्च वज्रगर्भो बोधिसत्त्व इमं महायानप्रभासं R 3 नाम बोधिसत्त्वसमाधिम्, अथ तावदेव दशसु दिक्षु दशबुद्धक्षेत्रकोटिपरमाणुरजःसमानां लोकधातूनामपरेण दशबुद्धक्षेत्रकोटिपरमाणुरजःसमास्तथागता मुखान्युपदर्शयामासुः यदिदं वज्रगर्भसमनामका एव । ते चैनं बुद्धा भगवन्त एवमूचुः—साधु साधु भो जिनपुत्र, यस्त्वमिमं 10 महायानप्रभासं बोधिसत्त्वसमाधिं समापद्यसे । अपि तु खलु पुनस्त्वं कुलपुत्र, अमी दशसु दिक्षु दशबुद्धक्षेत्रकोटिपरमाणुरजःसमानां लोकधातूनामपरेण दशबुद्धक्षेत्रकोटिपरमाणुरजः-समास्तथागता अधितिष्ठन्ति सर्वे वज्रगर्भसमनामानः अस्यैव भगवतो वैरोचनस्य पूर्वप्रणि-धानाधिष्ठानेन तव च पुण्यज्ञानविशेषेण सर्वबोधिसत्त्वानां च अचिन्त्यबुद्धधर्मालोकप्रभा-वनाज्ञानभूम्यवतारणाय । सर्वकुशलमूलसंग्रहणाय । सर्वबुद्धधर्मनिर्देशाय । असंभिन्नज्ञान-15 व्यवदानाय । सर्वलोकधर्मानुपलेपाय । लोकोत्तरकुशलमूलपरिशोधनाय । अचिन्त्यज्ञान-विषयाधिगमाय । यावत्सर्वज्ञानविषयाधिगमाय । यदिदं दशानां बोधिसत्त्वभूमीनामारम्भ-प्रतिलम्भाय । यथावद्बोधिसत्त्वभूमिव्यवस्थाननिर्देशाय । सर्वबुद्धधर्माध्यालम्बनाय । अनास्रवधर्मप्रविभागविभावनाय । सुविचितविचयमहाप्रज्ञालोककौशल्याय । सुनिस्तीरित-कौशल्यज्ञानमुखावतारणाय । यथार्हस्थानान्तरप्रभावनामन्दप्रतिभानालोकाय । महाप्रति-20 संविद्भूमिनिस्तीरणाय । बोधिचित्तस्मृत्यसंप्रमोषाय । सर्वसत्त्वधातुपरिपाचनाय । सर्वत्रानुगत-विनिश्चयकौशल्यप्रतिलम्भाय । अपि तु खलु पुनः कुलपुत्र प्रतिभातु तेऽयं धर्मालोकमुख-प्रभेदकौशल्यधर्मपर्यायो बुद्धानुभावेन तथागतज्ञानालोकाधिष्ठानेन स्वकुशलमूलपरिशोधनाय धर्मधातुसुपर्यवदापनाय सत्त्वधात्वनुग्रहाय धर्मकायज्ञानशरीराय सर्वबुद्धाभिषेकसंप्रतीच्छनाय सर्वलोकाभ्युद्गतात्मभावसंदर्शनाय सर्वलोकगतिसमतिक्रमाय लोकोत्तधर्मगतिपरिशोधनाय 25 सर्वज्ञज्ञानपरिपूरणाय ॥

R 4 अथ खलु ते बुद्धा भगवन्तो वज्रगर्भस्य बोधिसत्त्वस्य अनभिभूतात्मभावतां चोप-संहरन्ति स्म । असङ्गप्रतिभाननिर्देशतां च सुविशोभितज्ञानविभक्तिप्रवेशतां च स्मृत्य-संप्रमोषाधिष्ठानतां च सुविनिश्चितमतिकौशल्यतां च सर्वत्रानुगतबुद्ध्यनुत्सर्गतां च सम्यक्संबुद्धबलानवमृद्यतां च तथागतवैशारद्यानवलीनतां च सर्वज्ञज्ञानप्रतिसंविद्विभाग-30 धर्मनयनिस्तीरणतां च सर्वतथागतसुविभक्तकायवाक्चित्तालंकाराभिनिर्हारतां चोपसंहरन्ति स्म । तत्कस्माद्धेतोः? यथापि नाम अस्यैव समाधेर्धर्मताप्रतिलम्भेन पूर्वं प्रणिधानाभिर्हारेण च सुपरिशोधिताध्याशयतया च स्ववदातज्ञानमण्डलतया च सुसंभृतसंभारतया च सुकृत-

परिकर्मतया च अप्रमाणस्मृतिभाजनतया च प्रभास्वराधिमुक्तिविशोधनतया च सुप्रतिविद्धधारणीमुखासंभेदनतया च धर्मधातुज्ञानमुद्रासुमुद्रितया च ॥

अथ खलु ते बुद्धा भगवन्तस्तत्रस्था एव ऋद्ध्यनुभावेन दक्षिणान् पाणीन् प्रसार्य वज्रगर्भस्य बोधिसत्त्वस्य शीर्षं संप्रमार्जयन्ति स्म। समनन्तरस्पृष्टश्च वज्रगर्भो बोधिसत्त्वस्तै-र्बुद्धैर्भगवद्भिः, अथ तावदेव समाधेस्तस्माद् व्युत्थाय तान् बोधिसत्त्वानामन्त्रयते स्म— 5 सुविनिश्चितमिदं भवन्तो जिनपुत्रा बोधिसत्त्वप्रणिधानमसंभिन्नमनवलोक्यं धर्मधातुविपुलं आकाशधातुपर्यवसानमपरान्तकोटिनिष्ठं सर्वसत्त्वधातुपरित्राणम्। यत्र हि नाम भवन्तो जिनपुत्रा बोधिसत्त्वा अतीतानामपि बुद्धानां भगवतां ज्ञानभूमिमवतरन्ति, अनागतानामपि बुद्धानां भगवतां ज्ञानभूमिमवतरन्ति, प्रत्युत्पन्नानामपि बुद्धानां भगवतां ज्ञानभूमिमवतरन्ति, R 5 तत्र भवन्तो जिनपुत्रा दश बोधिसत्त्वभूमयो बुद्धानां भगवतां ज्ञानभूमिमवतरन्ति, 10 तत्र भवन्तो जिनपुत्राश्च दश बोधिसत्त्वभूमयोऽतीतानागतप्रत्युत्पन्नैर्बुद्धैर्भगवद्भिर्भाषिताश्च भाषिष्यन्ते च भाष्यन्ते च, याः संधाय अहं एवं वदामि। कतमा दश? यदुत प्रमुदिता च नाम बोधिसत्त्वभूमिः। विमला च नाम। प्रभाकरी च नाम। अर्चिष्मती च नाम। सुदुर्जया च नाम। अभिमुखी च नाम। दूरंगमा च नाम। अचला च नाम। साधुमती च नाम। धर्ममेघा च नाम बोधिसत्त्वभूमिः। इमा 15 भवन्तो जिनपुत्रा दश बोधिसत्त्वानां बोधिसत्त्वभूमयः, या अतीतानागतप्रत्युत्पन्नैर्बुद्धैर्भग-वद्भिर्भाषिताश्च भाषिष्यन्ते च भाष्यन्ते च। नाहं भवन्तो जिनपुत्रास्तं बुद्धक्षेत्रप्रसरं समनुपश्यामि, यत्र तथागता इमा दश बोधिसत्त्वभूमीर्न प्रकाशयन्ति। तत्कस्य हेतोः? सामुत्कर्षिकोऽयं भवन्तो जिनपुत्रा बोधिसत्त्वानां महासत्त्वानां बोधि( सत्त्व )मार्गपरिशोधन-धर्ममुखालोको यदिदं दशभूमिप्रभेदव्यवस्थानम्। अचिन्त्यमिदं भवन्तो जिनपुत्राः 20 स्थानं यदिदं भूमिज्ञानमिति ॥

अथ खलु वज्रगर्भो बोधिसत्त्व आसां दशानां बोधिसत्त्वभूमीनां नामधेयमात्रं परिकीर्त्य तूष्णीं बभूव, न भूयः प्रभेदशो निर्दिशति स्म। अथ खलु सा सर्वावती बोधिसत्त्वपर्षत् परितृषिता बभूव आसां दशानां बोधिसत्त्वभूमीनां नामधेयमात्रश्रवणेन भूमिविभागानुदीरणेन च। तस्या एतदभवत्—को नु खल्वत्र हेतुः कश्च प्रत्ययः, यद्वज्रगर्भो 25 बोधिसत्त्व आसां बोधिसत्त्वभूमीनां नामधेयमात्रं परिकीर्त्य तूष्णींभावेन अतिनामयति, न भूयः प्रभेदशो निर्दिशतीति?

तेन खलु पुनः समयेन तस्मिन्नेव बोधिसत्त्वपर्षत्संनिपाते विमुक्तिचन्द्रो नाम बोधिसत्त्वस्तस्या बोधिसत्त्वपर्षदश्चित्ताशयविचारमाज्ञाय वज्रगर्भं बोधिसत्त्वं गाथाभिगीतेन परिपृच्छति स्म— 30

किमर्थं शुद्धसंकल्पस्मृतिज्ञानगुणान्वित।
समुदीर्योत्तमा भूमीर्न प्रकाशयसे विभो ॥ १ ॥

R 6 विनिश्चिता इमे सर्वे बोधिसत्त्वा महायशः।
कस्मादुदीर्य भूमीश्च(स्त्वं) प्रविभागं न भाषसे ॥ २ ॥

श्रोतुकामा इमे सर्वे जिनपुत्रा विशारदाः।
विभज्यार्थगतिं सम्यग्भूमीनां समुदाहर ॥ ३ ॥

5 पर्षद्धि विप्रसन्नेयं कौसीद्यापगता शुभा।
शुद्धा प्रतिष्ठिता सारे गुणज्ञानसमन्विता ॥ ४ ॥

निरीक्षमाणा अन्योन्यं स्थिताः सर्वे सगौरवाः।
क्षौद्रं ह्यनेडकं यद्वत्काङ्क्षन्ति त्वमृतोपमम् ॥ ५ ॥

तस्य श्रुत्वा महाप्राज्ञो वज्रगर्भो विशारदः।
10 पर्षत्संतोषणार्थं हि भाषते स्म जिनात्मजः ॥ ६ ॥

दुष्करं परममेतदद्भुतं
बोधिसत्त्वचरितप्रदर्शनम्।
भूमिकारणविभाग उत्तमो
बुद्धभावसमुदागमो यतः ॥ ७ ॥

15 सूक्ष्म दुर्दृश विकल्पवर्जित-
श्चित्तभूमिविगतो दुरासदः।
गोचरो हि विदुषामनास्रवो
यत्र मुह्यति जगच्छ्रुवे सति ॥ ८ ॥

वज्रोपमं हृदयं स्थापयित्वा
20 बुद्धज्ञानं परमं चाधिमुच्य।
अनात्मानं चित्तभूमिं विदित्वा
शक्यं श्रोतुं ज्ञानमेतत्सुसूक्ष्मम् ॥ ९ ॥

अन्तरीक्ष इव रङ्गचित्रणा
मारुतः खगपथाश्रितो यथा।
25 ज्ञानमेवमिह भागशः कृतं
दुर्दृशं भगवतामनास्रवम् ॥ १० ॥

तस्य मे भवति बुद्धिरीदृशी
दुर्लभो जगति योऽस्य वेदकः।
श्रद्दधीत च य एतदुत्तमं
30 न प्रकाशयितुमुत्सहे यतः ॥ ११ ॥

एवमुक्ते विमुक्तिचन्द्रो बोधिसत्त्वो वज्रगर्भं बोधिसत्त्वमेतदवोचत्—सुपरिशुद्धो बतायं भो जिनपुत्र पर्षत्संनिपातः सुपरिशोधिताध्याशयानां बोधिसत्त्वानां सुपरिशोधितसंकल्पानां सुचरितचरणानां सुपर्युपासितबहुबुद्धकोटिशतसहस्राणां सुसंभृतसंभाराणामपरिमितगुणज्ञानसमन्वागतानामपगतविमतिसंदेहानामनङ्गणानां सुप्रतिष्ठिताध्याशयाधिमुक्तीनामपरप्रत्ययानामेषु बुद्धधर्मेषु । तत्साधु भो जिनपुत्र, प्रभाषस्व । प्रत्यक्षविहारिणो ह्येते बोधिसत्त्वा अत्र स्थाने ॥ R 7 5

वज्रगर्भ आह—किंचापि भो जिनपुत्र अयं बोधिसत्वपर्षत्संनिपातः सुपरिशुद्धः । पेयालं[1] । अथ च पुनर्येऽन्ये इमान्येवंरूपाण्यचिन्त्यानि स्थानानि शृणुयुः, श्रुत्वा च विमतिसंदेहमुत्पादयेयुः, तेषां तत्स्याद्दीर्घरात्रमनर्थाय अहिताय दुःखाय । इयं मे कारुण्यचित्तता, येन तूष्णींभावमेवाभिरोचयामि ॥ 10

अथ खलु विमुक्तिचन्द्रो बोधिसत्त्वः पुनरेव वज्रगर्भं बोधिसत्त्वमेतमेवार्थमध्येषते स्म—तत्साधु भो जिनपुत्र, प्रभाषस्व । तथागतस्यैवानुभावेन इमान्येवंरूपाण्यचिन्त्यानि स्थानानि स्वारक्षितानि श्रद्धेयानि भविष्यन्ति । तत्कस्य हेतोः ? तथा हि भो जिनपुत्र अस्मिन् भूमिनिर्देशे भाष्यमाणे धर्मताप्रतिलम्भ एष यत्सर्वबुद्धसमन्वाहारो भवति । सर्वे बोधिसत्त्वाश्च अस्या एव ज्ञानभूमेरारक्षार्थमौत्सुक्यमापद्यन्ते । तत्कस्य हेतोः ? एषा ह्यादिचर्या । एष समुदागमो बुद्धधर्माणाम् । तद्यथापि नाम भो जिनपुत्र सर्वलिप्यक्षरसंख्यानिर्देशो मातृकापूर्वंगमो मातृकापर्यवसानः, नास्ति स लिप्यक्षरसंख्यानिर्देशो यो विना मातृकानिर्देशम्, एवमेव भो जिनपुत्र सर्वे बुद्धधर्मा भूमिपूर्वंगमाश्च चर्यापरिनिष्पत्तितो भूमिपर्यवसानाः स्वयंभूज्ञानाधिगमतया । तस्मात्तर्हि भो जिनपुत्र, प्रभाषस्व । तथागता एव अर्हन्तः सम्यक्संबुद्धा आरक्षामधिष्ठास्यन्ति ॥ 15 20

R 8

अथ खलु ते सर्वे बोधिसत्त्वा एकस्वरसंगीतेन तस्यां वेलायां वज्रगर्भं बोधिसत्त्वं गाथाभिगीतेनैव तमर्थमध्येषन्ते स्म—

प्रवरवरविमलबुद्धे स्वभिधानानन्तघटितप्रतिभ ।
प्रव्याहर मधुरवरां वाचं परमार्थसंयुक्ताम् ॥ १२ ॥

स्मृतिधृतिविशुद्धबुद्धे दशबलबललाभमाशयविशुद्धिम् ।
प्रतिसंविद्दशविचयं भाषस्व दशोत्तमा भूमीः ॥ १३ ॥ 25

शमनियमनिभृतसुमनाः प्रहीणमदमानदृष्टिसंक्लेशा ।
निष्काङ्क्षा पर्षदियं प्रार्थयते भाषितानि तव ॥ १४ ॥

---

[1] The word पेयालं here stands for the passage सुपरिशुद्धो बतायं...... up to बुद्धधर्मेषु occurring in the preceding para.

तृषित इव शीतमुदकं बुभुक्षितोऽन्नं सुभेषजमिवार्तः।
क्षौद्रमिव स मधुकरगणस्तव वाचमुदीक्षते पर्षत्॥ १५॥

तत्साधु विमलबुद्धे भूमिविशेषान् वदस्व विरजस्कान्।
दशबलयुक्तासङ्गां सुगतगतिमुदीरयन्निखिलाम्॥ १६॥

5 अथ खलु तस्यां वेलायां भगवतः शाक्यमुनेरूर्णाकोशाद् बोधिसत्त्वबलालोको नाम रश्मिर्निश्चचार असंख्येयासंख्येयरश्मिपरिवारा। सा सर्वासु दशसु दिक्षु सर्वलोकधातुप्रसरानवभास्य सर्वापायदुःखानि प्रतिप्रस्रभ्य सर्वमारभवनानि ध्यामीकृत्य अपरिमितानि बुद्धपर्षन्मण्डलान्यवभास्य अचिन्त्यं बुद्धविषयाकारप्रभावं निदर्श्य सर्वासु दशसु दिक्षु सर्वलोकधातुप्रसरेषु सर्वतथागतपर्षन्मण्डलेषु धर्मदेशनाधिष्ठानाधिष्ठितान् बोधिसत्त्वानव-10 भास्य अचिन्त्यं बुद्धविकुर्वणं संदर्श्य उपर्यन्तरीक्षे महारश्मिघनाभ्रजालकूटागारं कृत्वा तस्थौ। तेषामपि बुद्धानां भगवतामूर्णाकोशेभ्य एवमेव बोधिसत्त्वबलालोका नाम रश्मयो निश्चेरुः। निश्चर्य असंख्येयासंख्येयरश्मिपरिवारास्ताः सर्वासु....पे...बुद्धविकुर्वणमादर्श्य इदं भगवतः शाक्यमुनेः पर्षन्मण्डलं वज्रगर्भस्य बोधिसत्त्वस्यात्मभावमवभास्य उपर्यन्तरीक्षे एवमेव महारश्मिघनाभ्रजालकूटागारं कृत्वा तस्थुः। इति हि आभिश्च भगवतः शाक्य-15 मुनेरूर्णाकोशप्रसृताभी रश्मिभिस्ते लोकधातवस्तानि च बुद्धपर्षन्मण्डलानि तेषां च बोधिसत्त्वानां काया आसनानि च स्फुटान्यवभासितानि संदृश्यन्ते स्म। तेषां च अपरिमाणेषु लोकधातुषु बुद्धानां भगवतामूर्णाकोशप्रसृताभी रश्मिभिरयं त्रिसाहस्रमहासाहस्रलोकधातुरिदं च भगवतः शाक्यमुनेः पर्षन्मण्डलं वज्रगर्भस्य च बोधिसत्त्वस्य काय आसनं स्फुटमवभासितं संदृश्यन्ते स्म। अथ खलु ततो महारश्मिघनाभ्रजालकूटागारा-20 द्बुद्धानुभावेन अयमेवंरूपः शब्दो निश्चरति स्म—

R 9

असमसमाकाशसमैर्दशबलवृषभैरनन्तमुख्यगुणैः।
शाक्यकुलजस्य धर्मैर्देवमनुष्योत्तमैः कृतमधिष्ठानम्॥ १७॥

अनुभावात्सुगतानां कोशं विवृणुष्व धर्मराजानाम्।
चर्यावरामुदारां प्रभेदशो ज्ञानभूमिं च॥ १८॥

25 अधिष्ठितास्ते सुगतैर्धारिता बोधिसत्त्वैश्च।
येषां श्रोत्रपथागतः श्रेष्ठो यो धर्मपर्यायः॥ १९॥

दश भूमीर्विरजसः पूरयित्वानुपूर्वेण।
बलानि दश च प्राप्य जिनतामर्पयिष्यन्ति॥ २०॥

सागरजले निमग्नाः कल्पोद्दाहेषु प्रक्षिप्ताः।
30 भव्यास्ते धर्मपर्यायमिमं श्रोतुमसंदिग्धाः॥ २१॥

ये तु विमतिसक्ताः संशयैश्चाभ्युपेताः।
सर्वशो न हि तेषां प्राप्स्यते श्रोत्रमेतत्॥ २२॥

भूमिज्ञानपथं श्रेष्ठं प्रवेशस्थानसंक्रमम्।
अनुपूर्वेण भाषस्व चर्याविषयमेव च ॥ २३ ॥

अथ खलु वज्रगर्भो बोधिसत्त्वो दश दिशो व्यवलोक्य भूयस्या मात्रया तस्याः पर्षदः संप्रसादनार्थं तस्यां वेलायामिमा गाथा अभाषत—

सूक्ष्मं दुराज्ञेयपदं महर्षिणा- 5 R 10
मकल्पकल्पापगतं सुदुःस्पृशम्।
अनाविलं पण्डितविज्ञवेदितं
स्वभावशान्तं ह्यनिरोधसंभवम् ॥ २४ ॥

स्वभावशून्यं प्रशमाद्व्यक्षयं
गत्या विमुक्तं समतातिनिर्वृतम्। 10
अनन्तमध्यं वचसानुदीरितं
त्रियध्वविमुक्तं नभसा समानकम् ॥ २५ ॥

शान्तं प्रशान्तं सुगतप्रवेदितं
सर्वैरुदाहारपदैः सुदुर्वचम्।
भूमिश्च चर्यापि च तस्य तादृशी 15
वक्तुं सुदुःखः कुत एव श्रोतुम् ॥ २६ ॥

तच्चिन्तया चित्तपथैश्च वर्जितं
ज्ञानाभिनिर्हारमुनीन्द्रवेदितम्।
न स्कन्धधात्वायतनप्रभावितं
न चित्तगम्यं न मनोविचिन्तितम् ॥ २७ ॥ 20

यथान्तरीक्षे शकुनेः पदं बुधै-
र्वक्तुं न शक्यं न च दर्शनोपगम्।
तथैव सर्वा जिनपुत्र भूमयो
वक्तुं न शक्याः कुत एव श्रोतुम् ॥ २८ ॥

प्रदेशमात्रं तु ततोऽभिधास्ये 25
मैत्रीकृपाभ्यां प्रणिधानतश्च।
यथानुपूर्वं न च चित्तगोचरं
ज्ञानेन ताः पूरयतां यथाशयम् ॥ २९ ॥

एतादृशो गोचर दुर्दृशोऽस्य
वक्तुं न शक्यः स हि स्वाशयस्थः। 30
किं तु प्रवक्ष्यामि जिनानुभावतः
शृण्वन्तु सर्वे सहिताः सगौरवाः ॥ ३० ॥

ज्ञानप्रवेशः स हि तादृशोऽस्य
वक्तुं न कल्पैरपि शक्यते यत्।
समासतस्तच्छृणुत ब्रवीम्यहं
धर्मार्थतत्त्वं निखिलं यथास्थितम्॥ ३१॥

R 11 5 सगौरवाः सन्त(:) सज्जा भवन्तो
वक्ष्याम्यहं साधु जिनानुभावतः।
उदीरयिष्ये वरधर्मघोषं
दृष्टान्तयुक्तं सहितं समाक्षरम्॥ ३२॥

सुदुष्करं तद्वचसापि वक्तुं
10 यश्चाप्रमेयः सुगतानुभावः।
मयि प्रविष्टः स च रश्मिमूर्ति-
र्यस्यानुभावेन ममास्ति शक्तिः॥ ३३॥

तत्र भवन्तो जिनपुत्राः सूपचितकुशलमूलानां सुचरितचरणानां सुसंभृतसंभाराणां सुपर्युपासितबुद्धोत्पादानां सुपरिपिण्डितशुक्लधर्माणां सुपरिगृहीतकल्याणमित्राणां सुविशुद्धा-
15 शयानां विपुलाध्याशयोपगतानां उदाराधिमुक्तिसमन्वागतानां कृपाकरुणाभिमुखानां (बोधि)-
सत्त्वानां बोधाय चित्तमुत्पाद्यते। बुद्धज्ञानाभिलाषाय दशबलबलाधिगमाय महावैशारद्याधि-
गमाय समताबुद्धधर्मप्रतिलम्भाय सर्वजगत्परित्राणाय महाकृपाकरुणाविशोधनाय दशदिग-
शेषज्ञानाधिगमाय सर्वबुद्धक्षेत्रासङ्गपरिशोधनाय त्र्यध्वैकक्षणविबोधाय महाधर्मचक्रप्रवर्तन-
वैशारद्याय च तच्चित्तमुत्पद्यते बोधिसत्त्वानां महाकरुणापूर्वंगमं प्रज्ञाज्ञानाधिपतेयमुपाय-
20 कौशल्यपरिगृहीतमाशयाध्याशयोपस्तब्धं तथागतबलाप्रमेयं सत्त्वबलबुद्धिबलसुविचितविचय-
मसंभिन्नज्ञानाभिमुखं स्वयंभूज्ञानानुकूलं सर्वबुद्धधर्मप्रज्ञाज्ञानाववादसंप्रश्लेषकं धर्मधातुपरम-
माकाशधातुस्थितकमपरान्तकोटिनिष्ठम्। येन चित्तोत्पादेन सहोत्पन्नेन बोधिसत्त्वोऽतिक्रान्तो
R 12 भवति, पृथग्ज्ञानभूमीमवक्रान्तो भवति, बोधिसत्त्वनियामं जातो भवति, तथागतकुलेऽनवद्यो
भवति, सर्वजातिवादेन व्यावृत्तो भवति, सर्वलोकगतिभ्योऽवक्रान्तो भवति, लोकोत्तरां गतिं
25 स्थितो भवति, बोधिसत्त्वधर्मतायां सुव्यवस्थितो भवति, बोधिसत्त्वावस्थानेन समतानुगतो
भवति, त्र्यध्वतथागतवंशनियतो भवति संबोधिपरायणः। एवंरूपधर्मव्यवस्थितो भवन्तो
जिनपुत्रा बोधिसत्त्वः प्रमुदितायां बोधिसत्त्वभूमौ व्यवस्थितो भवत्यचलनयोगेन॥

अत्र भवन्तो जिनपुत्राः प्रमुदितायां बोधिसत्त्वभूमौ स्थितो बोधिसत्त्वः प्रामोद्य-
बहुलो भवति प्रसादबहुलः प्रीतिबहुल उत्प्लावनाबहुल उदग्रीबहुल उत्सीबहुल उत्साहबहुलो-
30 ऽसंरम्भबहुलोऽविहिंसाबहुलोऽक्रोधबहुलो भवति। इति हि भवन्तो जिनपुत्राः प्रमुदितायां
बोधिसत्त्वभूमौ स्थितो बोधिसत्त्वः प्रमुदितो भवति, बुद्धान् भगवतोऽनुस्मरन् बुद्धधर्मान्
बोधिसत्त्वान् बोधिसत्त्वचर्याः पारमिताविशुद्धिं बोधिसत्त्वभूमिविशेषान् बोधिसत्त्वासंहार्यतां

तथागताववादानुशासनीं सत्त्वार्थसंप्रापणम् । प्रमुदितो भवति सर्वतथागतज्ञानप्रवेशप्रयोग-मनुस्मरन् । भूयः प्रामोद्यवान् भवति—व्यावृत्तोऽस्मि सर्वजगद्विषयात्, अवतीर्णोऽस्मि बुद्धभूमिसमीपम्, दूरीभूतोऽस्मि बालपृथग्जनभूमेः, आसन्नोऽस्मि ज्ञानभूमेः, व्यवच्छिन्नोऽस्मि सर्वापायदुर्गतिविनिपातात्, प्रतिशरणभूतोऽस्मि सर्वसत्त्वानाम्, आसन्नदर्शनोऽस्मि सर्वतथागतानाम्, संभूतोऽस्मि सर्वबुद्धविषये, सर्वबोधिसत्त्वसमतामुपगतोऽस्मि । विगतानि मे 5 सर्वभयत्रासच्छम्भितत्वानीति प्रामोद्यमुत्पादयति । तत्कस्य हेतोः? तथा हि भवन्तो जिनपुत्रा बोधिसत्त्वस्य अस्याः प्रमुदितायाः बोधिसत्त्वभूमेः सहप्रतिलम्भेन यानीमानि भयानि भवन्ति—यदिदमाजीविकाभयं वा अश्लोकभयं वा मरणभयं वा दुर्गतिभयं वा पर्षच्छारद्यभयं वा, तानि R 13 सर्वाणि व्यपगतानि भवन्ति । तत्कस्य हेतोः? यथापि इदमात्मसंज्ञापगमादात्मस्नेहोऽस्य न भवति, कुतः पुनः सर्वोपकरणस्नेहः? अतोऽस्य आजीविकाभयं न भवति । न च कंचि- 10 त्सत्कारं कस्यचित्सकाशात्प्रतिकाङ्क्षति, अन्यत्र मयैव तेषां सत्त्वानां सर्वोपकरणबाहुल्यमुपनामयितव्यमिति, अतोऽस्य अश्लोकभयं न भवति । आत्मदृष्टिविगमाच्च अस्यात्मसंज्ञा न भवति, अतोऽस्य मरणभयं न भवति । मृतस्यैव मे नियतं बुद्धबोधिसत्त्वैर्न विरहितो भविष्यामीति, अतोऽस्य दुर्गतिभयं न भवति । नास्ति मे कश्चिदाशयेन सर्वलोके समसमः, कुतः पुनरुत्तर इत्यतोऽस्य पर्षच्छारद्यभयं न भवति । एवं सर्वभयत्रासच्छम्भितत्वरोमहर्षापगतः ॥ 15

अथ खलु पुनर्भवन्तो जिनपुत्रा बोधिसत्त्वो महाकरुणापुरस्कृतत्वादनुपहतेन अप्राकृतेनाध्याशयेन भूयस्या मात्रया प्रयुज्यते सर्वकुशलमूलसमुदागमाय । स श्रद्धाधिपतेयतया प्रसादबहुलतया अधिमुक्तिविशुद्ध्या अवकल्पनाबहुलतया कृपाकरुणाभिनिर्हारतया महामैत्र्युपेततया अपरिखिन्नमानसतया ह्र्यपत्राप्यालंकारतया क्षान्तिसौरत्योपेततया तथागतार्हत्सम्यक्संबुद्धशासनगौरवचित्रीकरणतया रात्रिंदिवातृप्तकुशलमूलोपचयतया कल्याण- 20 मित्रनिषेवणतया धर्मारामाभिरततया अतृप्तबाहुश्रुत्यपर्येषणतया यथाश्रुतधर्मयोनिशःप्रत्यवेक्षणतया अनिकेतमानसतया अनध्यवसितलाभसत्कारश्लोकतया अनभिनन्दितोपकरणस्नेहतया रत्नोपमचित्तोत्पादातृप्ताभिनिर्हारतया सर्वज्ञभूम्यभिलाषणतया तथागतबलवैशारद्यावेणिकबुद्धधर्माध्यालम्बनतया पारमितासङ्गपर्येषणतया मायाशाठ्यपरिवर्जनतया R 14 यथावादितथाकारितया सततसमितं सत्यवचनानुरक्षणतया तथागतकुलभूषणतया बोधि- 25 सत्त्वशिक्षानुत्सर्जनतया महाशैलेन्द्रराजोपमसर्वज्ञताचित्ताप्रकम्पनतया सर्वलोकक्रियानभिलक्षणतया उत्सर्गलोकोत्तरपथोपेततया अतृप्तबोध्यङ्गसंभारोपचयतया सततसमितमुत्तरोत्तरविशेषपरिमार्गणतया । एवंरूपैर्भवन्तो जिनपुत्रा भूमिपरिशोधकैर्धर्मैः समन्वागतो बोधिसत्त्वः सुप्रतिष्ठितो भवति प्रमुदितायां बोधिसत्त्वभूमौ ॥

सोऽस्यां प्रमुदितायां बोधिसत्त्वभूमौ स्थितः सन् इमान्येवंरूपाणि महाप्रणिधानानि 30 महाव्यवसायान् महाभिनिर्हारानभिनिर्हरति—यदुत अशेषनिःशेषानवशेषसर्वबुद्धपूजोपस्थापनाय सर्वाकारवरोपेतमुदाराधिमुक्तिविशुद्धं धर्मधातुविपुलमाकाशधातुपर्यवसानमपरान्तकोटि-

 

निष्ठं सर्वकल्पसंख्याबुद्धोत्पादसंख्याप्रतिप्रस्रब्धं महापूजोपस्थानाय प्रथमं महाप्रणिधानमभि-
निर्हरति। यदुत सर्वतथागतभाषितधर्मनेत्रीसंधारणाय सर्वबुद्धबोधिसत्त्वसुपरिग्रहाय सर्वसम्य-
क्संबुद्धशासनपरिरक्षणाय....बुद्धोत्पादसद्धर्मपरिग्रहाय द्वितीयम्। यदुत सर्वबुद्धोत्पादनिरव-
शेषसर्वलोकधातुप्रसरेषु तुषितभवनवासमादिं कृत्वा च्यवनासंक्रमणगर्भस्थितिजन्मकुमारक्री-
5 डान्तःपुरवासाभिनिष्क्रमणदुष्करचर्याबोधिमण्डोपसंक्रमणमारधर्षणाभिसंबोध्यध्येषणमहाधर्म-
चक्रप्रवर्तनमहापरिनिर्वाणोपसंक्रमणाय पूजाधर्मसंग्रहप्रयोगपूर्वंगमं कृत्वा सर्वत्रैककालविव-
र्तनाय...बुद्धोत्पाद....यावन्महापरिनिर्वाणोपसंक्रमणाय तृतीयम्। यदुत सर्वबोधिसत्त्व-
R 15 चर्याविपुलमहद्गताप्रमाणासंभिन्नसर्वपारमितासंगृहीतसर्वभूमिपरिशोधनं साङ्गोपाङ्गनिर्हारस-
लक्षणसंवर्तविवर्तसर्वबोधिसत्त्वचर्याभूतयथावद्भूमिपथोपदेशपारमितापरिकर्माववादानुशास्न्य-
10 नुप्रदानोपस्तब्धचित्तोत्पादाभिनिर्हाराय...चर्या...चित्तोत्पादाभिनिर्हाराय चतुर्थम्। यदुत
निरवशेषसर्वसत्त्वधातुरूप्यरूपिसंज्ञासंज्ञिनैवसंज्ञिनासंज्ञाण्डजजरायुजसंस्वेदजौपपादुक-....
त्रैधातुकपर्यापन्नषड्गतिसमवसृतसर्वोपपत्तिपर्यापन्ननामरूपसंगृहीताशेषसर्वसत्त्वधातुपरिपाच-
नाय सर्वबुद्धधर्मावतारणाय सर्वगतिसंख्याव्यवच्छेदनाय सर्वज्ञज्ञानप्रतिष्ठापनाय...सत्त्वधातु
...सर्वसत्त्वधातुपरिपाचनाय पञ्चमम्। यदुत निरवशेषसर्वलोकधातुविपुलसंक्षिप्तमहद्गता-
15 प्रमाणसूक्ष्मौदारिकव्यत्यस्तावमूर्धसमतलप्रवेशसमवसरणानुगतेन्द्रजालविभागदशदिगशेषवि-
मात्रताविभागप्रवेशज्ञानानुगमप्रत्यक्षतायै...लोकधातु...लोकधातुवैमात्र्यावतारणाय षष्ठम्।
यदुत सर्वक्षेत्रैकक्षेत्रैकक्षेत्रसर्वक्षेत्रसमवसरणपरिशोधनमप्रमाणबुद्धक्षेत्रप्रभाव्यूहालंकारप्रति-
मण्डितं सर्वक्लेशापनयनपरिशुद्धपथोपेतमप्रमाणज्ञानाकरसत्त्वपरिपूर्णमुदारबुद्धविषयसमवसरणं
यथाशयसर्वसत्त्वसंदर्शनसंतोषणाय...बुद्धक्षेत्र...सर्वबुद्धक्षेत्रपरिशोधनाय सप्तमम्। यदुत
20 सर्वबोधिसत्त्वैकाशयप्रयोगतायै निःसपत्नकुशलमूलोपचयाय एकालम्बनसर्वबोधिसत्त्वसमतायै
R 16 अविरहितसततसमितबुद्धबोधिसत्त्वसमवधानाय यथेष्टबुद्धोत्पादसंदर्शनाय स्वचित्तोत्पादतथा-
गतप्रभावज्ञानानुगमाय अच्युतानुगामिन्यभिज्ञाप्रतिलम्भाय सर्वलोकधात्वनुविचरणाय सर्व-
बुद्धपर्षन्मण्डलप्रतिभासप्राप्तये सर्वोपपत्तिस्वशरीरानुगमाय अचिन्त्यमहायानोपेततायै बोधि-
सत्त्वचर्याचरणाव्यवच्छेदाय...चर्या...महायानावतारणाय अष्टमम्। यदुत अविवर्त्यचक्र-
25 समारूढबोधिसत्त्वचर्याचरणाय अमोघकायवाङ्मनस्कर्मणे सहदर्शननियतबुद्धधर्मत्वाय सह-
घोषोदाहारज्ञानानुगमाय सहप्रसादक्लेशविनिवर्तनाय महाभैषज्यराजोपमाश्रयप्रतिलम्भाय
चिन्तामणिवत्कायप्रतिलम्भाय सर्वबोधिसत्त्वचर्याचरणाय...चर्या...अमोघसर्वचेष्टतायै
नवमम्। यदुत सर्वलोकधातुष्वनुत्तरसम्यक्संबोध्यभिसंबोधाय एकवालपथाव्यतिवृत्तसर्व-
बालपृथग्जनजन्मोपपत्त्यभिनिष्क्रमणविकुर्वणबोधिमण्डधर्मचक्रप्रवर्तनमहापरिनिर्वाणोपदर्शनाय
30 महाबुद्धविषयप्रभावज्ञानानुगमाय सर्वसत्त्वधातुयथाशयबुद्धोत्पादक्षणक्षणविभङ्गविबोधप्रशम-
प्रापणसंदर्शनाय एकाभिसंबोधिसर्वधर्मनिर्माणस्फरणाय एकघोषोदाहारसर्वसत्त्वचित्ताशय-
संतोषणाय महापरिनिर्वाणोपदर्शनचर्याबलाव्यवच्छेदाय महाज्ञानभूमिसर्वधर्मव्यवस्थापन-

संदर्शनाय धर्मज्ञानर्द्धिमायाभिज्ञासर्वलोकधातुस्फरणाय अभिसंबोधिमहाज्ञानाभिज्ञाभिनिर्हाराय दशमम् । इति हि भवन्तो जिनपुत्रा इमान्येवंरूपाणि महाप्रणिधानानि महाव्यवसायान् महाभिनिर्हारान् दश प्रणिधानमुखानि प्रमुखं कृत्वा परिपूर्णानि दशप्रणिधानासंख्येय-शतसहस्राणि यानि बोधिसत्त्वः प्रमुदितायां बोधिसत्त्वभूमौ स्थितोऽभिनिर्हरति प्रतिलभते च ॥

R 17

तानि च महाप्रणिधानानि दशभिर्निष्ठापदैरभिनिर्हरति । कतमैर्दशभिः ? यदुत 5 सत्त्वधातुनिष्ठया च लोकधातुनिष्ठया च आकाशधातुनिष्ठया च धर्मधातुनिष्ठया च निर्वाण-धातुनिष्ठया च बुद्धोत्पादधातुनिष्ठया च तथागतज्ञानधातुनिष्ठया च चित्तालम्बनधातु-निष्ठया च बुद्धविषयज्ञानप्रवेशधातुनिष्ठया च लोकवर्तनीधर्मवर्तनीज्ञानवर्तनीधातुनिष्ठया च । इति हि या निष्ठा सत्त्वधातुनिष्ठायाः, सा मे निष्ठा एषां महाप्रणिधानानां भवतु । या निष्ठा यावज्ज्ञानवर्तनीधातुनिष्ठायाः, सा मे निष्ठा एषां महाप्रणिधानानां भवतु । इति 10 ह्यनिष्ठा सत्त्वधातुनिष्ठा । अनिष्ठानीमानि मे कुशलमूलानि भवन्तु । अनिष्ठा यावज्ज्ञान-वर्तनीधातुनिष्ठा । अनिष्ठानीमानि मे कुशलमूलानि भवन्त्विति ॥

स एवं स्वभिनिर्हृतप्रणिधानः कर्मण्यचित्तो मृदुचित्तोऽसंहार्यश्रद्धो भवति । सोऽभिश्रद्दधाति तथागतानामर्हतां सम्यक्संबुद्धानां पूर्वान्तचर्याभिनिर्हारप्रवेशं पारमितासमु-दागमं भूमिपरिनिष्पत्तिं वैशेषिकतां बलपरिनिष्पत्तिं वैशारद्यपरिपूरिमावेणिकबुद्धधर्मासंहार्य- 15 तामचिन्त्यां बुद्धधर्मतामनन्तमध्यं तथागतविषयाभिनिर्हारमपरिमाणज्ञानानुगतं तथागत-गोचरानुप्रवेशं फलपरिनिष्पत्तिमभिश्रद्दधाति । समासतः सर्वबोधिसत्त्वचर्यां यावत्तथागत-भूमिज्ञाननिर्देशाधिष्ठानमभिश्रद्दधाति ॥

तस्यैवं भवति–एवं गम्भीराः खलु पुनरिमे बुद्धधर्माः एवं विविक्ताः एवं शान्ताः एवं शून्याः एवमानिमित्ताः एवमप्रणिहिताः एवं निरुपलेपाः एवं विपुलाः एवमपरिमाणाः एव- 20 मुदाराः एवं दुरासदाश्चेमे बुद्धधर्माः । अथ च पुनरिमे बालपृथग्जनाः कुदृष्टिपतितया संतत्या अविद्यान्धकारपर्यवनद्धमानसेन मानध्वजसमुच्छ्रितैः संकल्पैस्तृष्णाजालाभिलषितैर्मनसिकारै-

R 18

र्मायाशाठ्यगहनानुचरितैश्चित्ताशयैरीर्ष्यामात्सर्यसंप्रयुक्तैर्गत्युपपत्तिप्रयोगै रागद्वेषमोहपरिचितैः कर्मोपचयैः क्रोधोपनाहसंधुक्षिताभिश्चित्तज्वालाभिर्विपर्याससंप्रयुक्तैः कर्मक्रियाभिनिर्हारैः कामभवाविद्यास्रवानुबद्धैश्चित्तमनोविज्ञानबीजैस्त्रैधातुके पुनर्भवाङ्कुरमभिनिर्वर्तयन्ति यदिदं 25 नामरूपसहजाविनिर्भागगतम् । तेनैव च नामरूपेण विवर्धितेन एषां षडायतनग्रामः संभवति । संभूतेष्वायतनेष्वन्योन्यस्पर्शनिपाततो वेदना संभवति । तामेव वेदनां भूयो भूयो-ऽभिनन्दतां तृष्णोपादानं विवर्धते । विवृद्धे तृष्णोपादाने भवः संभवति । संभूते च भवे जातिजरामरणशोकपरिदेवदुःखदौर्मनस्योपायासाः प्रादुर्भवन्ति । एवमेतेषां सत्त्वानां दुःख-स्कन्धोऽभिनिर्वर्तते आत्मात्मीयविगतो रिक्तस्तुच्छः शून्यो निरीहो निश्चेष्टो जडस्तृणकाष्ठ- 30 कुड्यवर्त्मप्रतिभासोपमः । न चैवमवबुध्यन्त इति । तेषामेवंरूपेण सत्त्वानां दुःखस्कन्धावि-प्रमोक्षं दृष्ट्वा सत्त्वेषु महाकरुणोन्मिञ्जः संभवति–एतेऽस्माभिः सत्त्वाः परित्रातव्याः परिमोच-

यितव्या अतो महासंमोहात्, अत्यन्तसुखे च निर्वाणे प्रतिष्ठापयितव्याः इति। अतोऽस्य महामैत्र्युन्मिञ्जः संभवति॥

एवं कृपामैत्र्यनुगतेन खलु पुनर्भवन्तो जिनपुत्रा बोधिसत्त्वोऽध्याशयेन प्रथमायां बोधिसत्त्वभूमौ वर्तमानः सर्ववस्तुषु सापेक्षचित्तं परिवर्ज्य बुद्धज्ञाने च उदारस्पृहाभिलाष-
5 बुद्धिर्महात्यागेषु प्रयुज्यते। स य इमे त्यागाः—यदुत धनधान्यकोशकोष्ठागारपरित्यागो वा हिरण्यसुवर्णमणिमुक्तावैडूर्यशङ्खशिलाप्रवालजातरूपरजतपरित्यागो वा रत्नाभरणविभूषणपरित्यागो वा हयरथगजपतिवाहनपरित्यागो वा उद्यानतपोवनविहारपरित्यागो वा दासीदासकर्म-
R 19 करपौरुषेयपरित्यागो वा ग्रामनगरनिगमजनपदराष्ट्रराजधानीपरित्यागो वा भार्यापुत्रदुहितृपरित्यागो वा सर्वप्रियमनापवस्तुपरित्यागो वा शिरःकर्णनासाकरचरणनयनस्वमांसशोणितास्थि-
10 मज्जामेदश्छविचर्महृदयसर्वात्मभावपरित्यागो वा, तेष्वनपेक्षो भूत्वा सर्ववस्तुषु बुद्धज्ञाने च उदारस्पृहाभिलाषबुद्धिः परित्यजति। एवं ह्यस्य प्रथमायां बोधिसत्त्वभूमौ स्थितस्य महात्यागः संभवति॥

स एवं करुणामैत्रीत्यागाशयो भूत्वा सर्वसत्त्वपरित्राणार्थं भूयो भूयो लौकिकलोकोत्तरानर्थान् परिमार्गते परिगवेषते। परिमार्गमाणः परिगवेषमाणश्च अपरिखेदचित्तमुत्पाद-
15 यति। एवमस्यापरिखेदः संभवति। अपरिखिन्नश्च सर्वशास्त्रविशारदो भवति। अतोऽस्य शास्त्रज्ञता संभवति। स एवं शास्त्रोपेतः क्रियाक्रियाविचारितया बुद्ध्या हीनमध्यप्रणीतेषु सत्त्वेषु तथत्वाय प्रतिपद्यते यथाबलं यथाभजमानम्। अतोऽस्य लोकज्ञता संभवति। लोकज्ञश्च कालवेलामात्रचारी ह्रयपत्राप्यविभूषितया संतत्या आत्मार्थपरार्थेषु प्रयुज्यते। अतोऽस्य ह्रयपत्राप्यं संभवति। तेषु च प्रयोगेषु नैष्क्रम्यचारी अविवर्त्याप्रत्युदावर्त्यबलाधान-
20 प्राप्तो भवति। एवमस्य धृतिबलाधानमाजातं भवति। धृतिबलाधानप्राप्तश्च तथागतपूजोपस्थानेषु प्रयुज्यते, शासने च प्रतिपद्यते। एवं ह्यस्येमे दश भूमिपरिशोधका धर्मा आजाता भवन्ति। तद्यथा—श्रद्धा करुणा मैत्री त्यागः खेदसहिष्णुता शास्त्रज्ञता लोकज्ञता ह्रयपत्राप्यं धृतिबलाधानं तथागतपूजोपस्थानमिति॥

तस्य अस्यां प्रमुदितायां बोधिसत्त्वभूमौ स्थितस्य बोधिसत्त्वस्य बहवो बुद्धा आभास-
25 मागच्छन्ति औदारिकदर्शनेन प्रणिधानबलेन च। बहूनि बुद्धशतानि बहूनि बुद्धसहस्राणि बहूनि बुद्धशतसहस्राणि बहूनि बुद्धनयुतशतसहस्राणि बहवो बुद्धकोट्यो बहूनि बुद्धकोटीशतानि बहूनि बुद्धकोटीसहस्राणि बहूनि बुद्धकोटीशतसहस्राणि बहूनि बुद्धकोटीनयुतशत-
R 20 सहस्राण्याभासमागच्छन्ति औदारिकदर्शनेन प्रणिधानबलेन च। स तांस्तथागतानर्हतः सम्यक्संबुद्धान् दृष्ट्वा उदाराध्याशयेन सत्करोति गुरुकरोति मानयति पूजयति, चीवरपिण्डपात्र-
30 शयनासनग्लानप्रत्ययभैषज्यपरिष्कारैश्च प्रतिपादयति। बोधिसत्त्वसुखोपधानं चोपसंहरति। संघगणसंमाननतां च करोति। तानि च कुशलमूलान्यनुत्तरायां सम्यक्संबोधौ परिणामयति। तांश्च अस्य बुद्धान् भगवतः पूजयतः सत्त्वपरिपाक आजातो भवति। स सत्त्वांश्च परिपाचयति

दानेन प्रियवद्येन च अधिमुक्तिबलेन च। अस्योपरि द्वे अर्थसंग्रहवस्तून्याजायेते न तु खल्वशेषज्ञानप्रतिवेधप्रतिलम्भेन। तस्य दशभ्यः पारमिताभ्यो दानपारमिता अतिरिक्ततमा भवति, न च परिशेषासु न समुदागच्छति यथाबलं यथाभजमानम्। स यथा यथा बुद्धांश्च भगवतः पूजयति, सत्त्वपरिपाकाय च प्रयुज्य तानिमान् दश भूमिपरिशोधकान् धर्मान् समादाय वर्तते, तथा तथास्य तानि कुशलमूलानि सर्वज्ञतापरिणामितानि भूयस्या मात्रयोत्तप्यन्ते, 5 परिशुद्ध्यन्ति, कर्मण्यानि च भवन्ति यथाकामतया। तद्यथापि नाम भवन्तो जिनपुत्रा जातरूपं कुशलेन कर्मारेण यथा यथाग्नौ प्रक्षिप्यते, तथा तथा परिशुद्ध्यति कर्मण्यं च भवति विभूषणालंकारविधिषु यथाकामतया, एवमेव भवन्तो जिनपुत्रा यथा यथा बोधिसत्त्वो...पेयालं...यथाकामतया॥

पुनरपरं भवन्तो जिनपुत्रा बोधिसत्त्वेन अस्यां प्रथमायां बोधिसत्त्वभूमौ स्थितेन 10 अस्या एव प्रथमाया बोधिसत्त्वभूमेराकारप्रतिलम्भनिष्यन्दाः परिमार्गितव्याः परिगवेषितव्याः परिप्रष्टव्याः। बुद्धबोधिसत्त्वानां कल्याणमित्राणां च सकाशादतृप्तेन च भवितव्यं भूम्यङ्गपरिनिष्पादनाय। एवं यावद्दशम्या बोधिसत्त्वभूमेरङ्गपरिनिष्पादनाय। तेन भूमिपक्षप्रतिपक्षकुशलेन च भवितव्यं भूमिसंवर्तविवर्तकुशलेन च भूम्याकारनिष्यन्दकुशलेन च भूमिप्रतिलम्भविभावनाकुशलेन च भूम्यङ्गपरिशोधनकुशलेन च भूमेर्भूमिसंक्रमण- 15 कुशलेन च भूमिभूमिव्यवस्थानकुशलेन च भूमिभूमिविशेषज्ञानकुशलेन च भूमिभूमिप्रतिलम्भाप्रत्युदावर्त्यकुशलेन च सर्वबोधिसत्त्वभूमिपरिशोधनतया तथागतज्ञानभूम्याक्रमणकुशलेन च भवितव्यम्। एवं भूम्याकाराभिनिर्हारकुशलस्य हि भवन्तो जिनपुत्रा बोधिसत्त्वस्य प्रथमाया बोधिसत्त्वभूमेरुच्छलितस्य निष्ठानं न संभवति यावद्दशभूमिभूम्याक्रमण- R 21 मिति। मार्गाधिष्ठानागमेन च भूमिज्ञानालोकेन च बुद्धज्ञानालोकं प्राप्नोति। तद्यथापि 20 नाम भवन्तो जिनपुत्राः कुशलः सार्थवाहो महासार्थपरिकर्षणाभिप्रायो महानगरमनुप्रापयितुकामः आदावेव मार्गगुणांश्च मार्गविवर्तदोषांश्च मार्गस्थानान्तरविशेषांश्च मार्गस्थानान्तरविवर्तदोषांश्च मार्गक्रियापथ्योदनकार्यतां च परिमार्गयति परिगवेषयते। स यावन्महानगरानुप्राप्तये कुशलो भवत्यनुचलित एव प्रथमान्मार्गान्तरस्थानात्। स एवं ज्ञानविचारितया बुद्ध्या महापथ्योदनसमृद्ध्या अनुपूर्वेण महासार्थेन सार्धं यावन्महानगर- 25 मनुप्राप्नोति, न चाटवीकान्तारदोषैः सार्थस्य वा आत्मनो वास्योपघातः संपद्यते। एवमेव भवन्तो जिनपुत्रा बोधिसत्त्वः कुशलो महासार्थवाहो यदा प्रथमायां बोधिसत्त्वभूमौ स्थितो भवति, तदा भूमिपक्षप्रतिपक्षकुशलो भवति, भूमिसंवर्तविवर्तकुशलो भवति, भूम्याकारनिष्यन्दकुशलो भवति, भूमिप्रतिलम्भविभावनाकुशलो भवति, भूम्यङ्गपरिशोधनकुशलो भवति, भूमेर्भूमिसंक्रमणकुशलो भवति, भूमिभूमिव्यवस्थानकुशलो भवति, भूमिभूमिविशेषज्ञानकुशलो 30 भवति, भूमिभूमिप्रतिलम्भाप्रत्युदावर्त्यकुशलो भवति, सर्वबोधिसत्त्वभूमिपरिशोधनतया तथागतज्ञानभूम्याक्रमणकुशलश्च भवति। तदा बोधिसत्त्वो महापुण्यसंभारपथ्योदनसुसं-

गृहीतो ज्ञानसंभारसुकृतविचयो महासत्त्वसार्थपरिकर्षणाभिप्रायः सर्वज्ञतामहानगरमनुप्रापयितुकामः आदावेव भूमिमार्गगुणांश्च भूमिमार्गविवर्तदोषांश्च भूमिमार्गस्थानान्तरविशेषांश्च भूमिमार्गस्थानान्तरविवर्तदोषांश्च महापुण्यज्ञानसंभारपथ्यदनक्रियाकार्यतां च परिमार्गते परिगवेषते बुद्धानां भगवतां बोधिसत्त्वानां कल्याणमित्राणां च सकाशात्। स यावत्सर्वज्ञता-
5 महानगरानुप्राप्तिकुशलो भवत्यनुच्चलित एव प्रथमान्मार्गान्तरस्थानात्। स एवं ज्ञानविचारितया बुद्ध्या महापुण्यज्ञानसंभारपथ्यदनसंरुद्धया महान्तं सत्त्वसार्थं यथापरिपाचितं संसाराटवीकान्तारदुर्गादतिक्रम्य यावत्सर्वज्ञतामहानगरमनुप्रापयति। न संसाराटवीकान्तारदोषैः सत्त्वसार्थस्य वा आत्मनो वा अस्योपघातः संपद्यते। तस्मात्तर्हि भवन्तो जिनपुत्रा बोधिसत्त्वेन अपरिखिन्नेन भूमिपरिकर्मविशेषाभियुक्तेन भवितव्यम्। अयं भवन्तो जिनपुत्रा
10 बोधिसत्त्वस्य प्रथमायाः प्रमुदिताया बोधिसत्त्वभूमेर्मुखप्रवेशः समासतो निर्दिश्यते ॥

R 22 योऽस्यां प्रतिष्ठितो बोधिसत्त्वो भूयस्त्वेन जम्बूद्वीपेश्वरो भवति महैश्वर्याधिपत्यप्रतिलब्धो धर्मानुरक्षी कृती प्रभुः सत्त्वान् महात्यागेन संग्रहीतुकुशलः सत्त्वानां मात्सर्यमलविनिवृत्तयेऽपर्यन्तो महात्यागारम्भैः। यच्च किंचित्कर्मारभते दानेन वा प्रियवद्यतया वा अर्थक्रियया वा समानार्थतया वा, तत्सर्वमविरहितं बुद्धमनसिकारैर्धर्ममनसिकारैः संघमनसिकारैर्बोधि-
15 सत्त्वमनसिकारैर्बोधिसत्त्वचर्यामनसिकारैः पारमितामनसिकारैर्भूमिमनसिकारैर्बलमनसिकारैर्वैशारद्यमनसिकारैरावेणिकबुद्धधर्ममनसिकारैर्यावत्सर्वाकारवरोपेतसर्वज्ञज्ञानमनसिकारैः। किमिति? सर्वसत्त्वानामग्र्यो भवेयं श्रेष्ठो ज्येष्ठो वरः प्रवर उत्तमोऽनुत्तमो नायको विनायकः परिणायको यावत्सर्वज्ञज्ञानप्रतिशरणो भवेयम् इति। आकाङ्क्षंश्च तथारूपं वीर्यमारभते यथारूपेण वीर्यारम्भेण सर्वगृहकलत्रभोगानुत्सृज्य तथागतशासने प्रव्रजति। प्रव्रजितश्च
20 सन् एकक्षणलवमुहूर्तेन समाधिशतं च प्रतिलभते समापद्यते च। बुद्धशतं च पश्यति, तेषां चाधिष्ठानं संजानीते। लोकधातुशतं च कम्पयति। क्षेत्रशतं चाक्रमति। लोकधातुशतं चावभासयति। सत्त्वशतं च परिपाचयति। कल्पशतं च तिष्ठति। कल्पशतं च पूर्वान्तापरान्ततः प्रविशति। धर्ममुखशतं च प्रविचिनोति। कायशतं चादर्शयति। कायं कायं च बोधिसत्त्वशतपरिवारमादर्शयति। तथा उत्तरे प्रणिधानबलिका बोधिसत्त्वाः प्रणिधानविशे-
25 षिकतया विकुर्वन्ति येषां न सुकरा संख्या कर्तुं कायस्य वा प्रभाया वा ऋद्धेर्वा चक्षुषो वा गोचरस्य वा स्वरस्य वा चर्याया वा व्यूहस्य वा अधिष्ठानस्य वा अधिमुक्तेर्वा अभिसंस्काराणां वा यावदेतावद्भिरपि कल्पकोटिनियुतशतसहस्रैरिति ॥

प्रमुदिता नाम प्रथमा भूमिः ॥



## २ विमला नाम द्वितीया भूमिः ।

वज्रगर्भो बोधिसत्त्व आह—योऽयं भवन्तो जिनपुत्रा बोधिसत्त्वः प्रथमायां बोधिसत्त्वभूमौ सुपरिकर्मकृतो द्वितीयां बोधिसत्त्वभूमिमभिलषति, तस्य दश चित्ताशयाः प्रवर्तन्ते । कतमे दश ? यदुत ऋज्वाशयता च मृद्वाशयता च कर्मण्याशयता च दमाशयता च शमाशयता च कल्याणाशयता च असंसृष्टाशयता च अनपेक्षाशयता च उदाराशयता च माहात्म्याशयता च । इमे दश चित्ताशयाः प्रवर्तन्ते । ततो द्वितीयायां बोधिसत्त्वभूमौ विमलायां प्रतिष्ठितो भवति ॥ 5 R 23

तत्र भवन्तो जिनपुत्रा विमलायां बोधिसत्त्वभूमौ स्थितो बोधिसत्त्वः प्रकृत्यैव दशभिः कुशलैः कर्मपथैः समन्वागतो भवति । कतमैर्दशभिः ? यदुत प्राणातिपातात्प्रतिविरतो भवति निहतदण्डो निहतशस्त्रो निहतवैरो लज्जावान् दयापन्नः सर्वप्राणिभूतेषु हितसुखानुकम्पी मैत्रचित्तः । स संकल्पैरपि प्राणिविहिंसां न करोति, कः पुनर्वादः परसत्त्वेषु सत्त्वसंज्ञिनः संचिन्त्यौदारिककायविहेठनया ॥ 10

अदत्तादानात्प्रतिविरतः खलु पुनर्भवति स्वभोगसंतुष्टः परभोगानभिलाषी अनुकम्पकः । स परपरिगृहीतेभ्यो वस्तुभ्यः परपरिगृहीतसंज्ञी स्तेयचित्तमुपस्थाप्य अन्तशस्तृणपर्णमपि नादत्तमादाता भवति, कः पुनर्वादोऽन्येभ्यो जीवितोपकरणेभ्यः ॥ 15

काममिथ्याचारात्प्रतिविरतः खलु पुनर्भवति स्वदारसंतुष्टः परदारानभिलाषी । स परपरिगृहीतासु स्त्रीषु परभार्यासु गोत्रध्वजधर्मरक्षितासु अभिध्यामपि नोत्पादयति, कः पुनर्वादो द्वीन्द्रियसमापत्त्या वा अनङ्गविज्ञप्त्या वा ॥

अनृतवचनात्प्रतिविरतः खलु पुनर्भवति सत्यवादी भूतवादी कालवादी, यथावादी तथाकारी । सोऽन्तशः स्वप्नान्तरगतोऽपि विनिधाय दृष्टिं क्षान्तिं रुचिं मतिं प्रेक्षां विसंवादनाभिप्रायो नानृतां वाचं निश्चारयति, कः पुनर्वादः समन्वाहृत्य ॥ 20

पिशुनवचनात्प्रतिविरतः खलु पुनर्भवति अभेदाविहेठाप्रतिपन्नः सत्त्वानाम् । स नेतः श्रुत्वा अमुत्राख्याता भवत्यमीषां भेदाय । न अमुतः श्रुत्वा इहाख्याता भवत्येषां भेदाय । न संहितान् भिनत्ति, न भिन्नानामनुप्रदानं करोति । न व्यग्रारामो भवति न व्यग्ररतो न व्यग्रकरणीं वाचं भाषते सद्भूतामसद्भूतां वा ॥ R 24 25

परुषवचनात्प्रतिविरतः खलु पुनर्भवति । स येयं वागदेशा कर्कशा परकटुका पराभिसंजननी अन्वक्षान्वक्षप्राग्भारा ग्राम्या पार्थग्जनकी अनेला अकर्णसुखा क्रोधरोषनिश्चारिता हृदयपरिदहनी मनःसंतापकरी अप्रिया अमनआपा अमनोज्ञा स्वसंतानपरसंतानविनाशिनी । तथारूपां वाचं प्रहाय येयं वाक् स्निग्धा मृद्वी मनोज्ञा मधुरा प्रियकरणी मनआपकरणी हितकरणी नेला कर्णसुखा हृदयंगमा प्रेमणीया पौरी वर्णविस्पष्टा विज्ञेया श्रवणीया निश्रिता बहुजनेष्टा बहुजनकान्ता बहुजनप्रिया बहुजनमनआपा विज्ञापन्ना 30

सर्वसत्त्वहितसुखावहा समाहिता मनउत्प्लावनकरी मनःप्रह्लादनकरी स्वसंतानपरसंतान-प्रसादनकरी तथारूपां वाचं निश्चारयति ॥

संभिन्नप्रलापात्प्रतिविरतः खलु पुनर्भवति सुपरिहार्यवचनः कालवादी भूतवादी अर्थवादी धर्मवादी न्यायवादी विनयवादी। स निदानवतीं वाचं भाषते कालेन सावदानाम्। 5 स चान्तश इतिहासपूर्वकमपि वचनं परिहार्यं परिहरति, कः पुनर्वादो वाग्विक्षेपेण ॥

अनभिध्यालुः खलु पुनर्भवति परस्वेषु परकामेषु परभोगेषु परवित्तोपकरणेषु। परपरिगृहीतेषु स्पृहामपि नोत्पादयति, किमिति यत्परेषां तन्नाम स्यादिति नाभिध्यामुत्पादयति, न प्रार्थयते न प्रणिदधाति, न लोभचित्तमुत्पादयति ॥

R 25 अव्यापन्नचित्तः खलु पुनर्भवति। सर्वसत्त्वेषु मैत्रचित्तो हितचित्तो दयाचित्तः सुख-10 चित्तः स्निग्धचित्तः सर्वजगदनुग्रहचित्तः सर्वभूतहितानुकम्पाचित्तः। स यानीमानि क्रोधोपनाहखिलमलव्यापादपरिदाहसंधुक्षितप्रतिघाद्यानि तानि प्रहाय यानीमानि हितोपसंहितानि मैत्र्युपसंहितानि सर्वसत्त्वहितसुखाय वितर्कितविचारितानि, तान्यनुवितर्कयिता भवति ॥

सम्यग्दृष्टिः खलु पुनर्भवति सम्यक्पथगतः कौतुकमङ्गलनानाप्रकारकुशीलदृष्टि-विगतऋजुदृष्टिरशठोऽमायावी बुद्धधर्मसंघनियताशयः। स इमान् दश कुशलान् कर्मपथान् 15 सततसमितमनुरक्षन् एवं चित्ताशयमभिनिर्हरति—या काचित्सत्त्वानामपायदुर्गतिविनिपात-प्रज्ञप्तिः सर्वा, सा एषां दशानामकुशलानां कर्मपथानां समादानहेतोः। हन्त अहमात्मनैव सम्यक्प्रतिपत्तिस्थितः परान् सम्यक्प्रतिपत्तौ स्थापयिष्यामि। तत्कस्य हेतोः? अस्थानमेत-दनवकाशो यदात्मा विप्रतिपत्तिस्थितः परान् सम्यक्प्रतिपत्तौ स्थापयेत्, नैतत्स्थानं विद्यत इति। स एवं प्रविचिनोति—एषां दशानां अकुशलानां कर्मपथानां समादानहेतो-20 र्निरयतिर्यग्योनियमलोकगतयः प्रज्ञायन्ते। पुनः कुशलानां कर्मपथानां समादानहेतोर्मनुष्यो-पपत्तिमादिं कृत्वा यावद्भवाग्रमित्युपपत्तयः प्रज्ञायन्ते। तत उत्तरं त एव दश कुशलाः कर्मपथाः प्रज्ञाकारेण परिभाव्यमानाः प्रादेशिकचित्ततया त्रैधातुकोत्त्रस्तमानसतया महा-करुणाविकलतया परतः श्रवणानुगमेन घोषानुगमेन च श्रावकयानं संवर्तयन्ति। R 26 तत उत्तरतरं परिशोधिता अपरप्रणेयतया स्वयंभूत्वानुकूलतया स्वयमभिसंबोधनतया 25 परतोऽपरिमार्गणतया महाकरुणोपायविकलतया गम्भीरेदंप्रत्ययानुबोधनेन प्रत्येकबुद्धयानं संवर्तयति। तत उत्तरतरं परिशोधिताविपुलाप्रमाणतया महाकरुणोपेततया उपायकौशल-संगृहीततया संबद्धमहाप्रणिधानतया सर्वसत्त्वापरित्यागतया बुद्धज्ञानविपुलाध्यालम्बनतया बोधिसत्त्वभूमिपरिशुद्ध्यै पारमितापरिशुद्ध्यै चर्याविपुलत्वाय संवर्तन्ते। तत उत्तरतरं परिशोधिताः सर्वाकारपरिशोधितत्वाद्यावद्दशबलबलत्वाय सर्वबुद्धधर्माः समुदागमाय संवर्तन्ते। 30 तस्मात् तर्ह्यस्माभिः समाभिनिर्हारे सर्वाकारपरिशोधनाभिनिर्हार एव योगः करणीयः ॥

स भूयस्या मात्रया एवं प्रतिसंशिक्षते—इमे खलु पुनर्दशाकुशलाः कर्मपथा अधिमात्र-त्वादासेविता भाविता बहुलीकृता निरयहेतुर्मध्यत्वात् तिर्यग्योनिहेतुर्मृदुत्वाद्यमलोकहेतुः। तत्र

प्राणातिपातो निरयमुपनयति, तिर्यग्योनिमुपनयति, यमलोकमुपनयति। अथ चेत्पुनर्मनुष्येषु उपपद्यते, द्वौ विपाकावभिनिर्वर्तयति अल्पायुष्कतां च बहुग्लान्यतां च। अदत्तादानं... पेयालं...परीत्तभोगतां च साधारणभोगतां च। काममिथ्याचारो...अनाजानेयपरिवारतां च ससपत्नदारतां च। मृषावादो...अभ्याख्यानबहुलतां च परैर्विसंवादनतां च। पैशुन्यं... भिन्नपरिवारतां च हीनपरिवारतां च। पारुष्यं...अमनापश्रवणतां च कलहवचनतां च। 5 संभिन्नप्रलापो...अनादेयवचनतां च अनिश्चितप्रतिभानतां च। अभिध्या...असंतुष्टितां च महेच्छतां च। व्यापादो...अहितैषितां च परोत्पीडनतां च। मिथ्यादृष्टिः...कुदृष्टि-पतितश्च भवति शठश्च मायावी। एवं खलु महतोऽपरिमाणस्य दुःखस्कन्धस्य इमे दशाकुशलाः कर्मपथाः समुदागमाय संवर्तन्ते। हन्त वयं इमान् दशाकुशलान् कर्मपथान् विवर्ज्य धर्मारामरतिरता विहराम। स इमान् दशाकुशलान् कर्मपथान् प्रहाय दशकुशलकर्मपथ- 10 प्रतिष्ठितः परांस्तेष्वेव प्रतिष्ठापयति। स भूयस्या मात्रया सर्वसत्त्वानामन्तिके हितचित्तता-मुत्पादयति। सुखचित्ततां मैत्रचित्ततां कृपाचित्ततां दयाचित्ततामनुग्रहचित्ततामारक्षाचित्ततां समचित्ततामाचार्यचित्ततां शास्तृचित्ततामुत्पादयति। तस्यैवं भवति—कुदृष्टिपतिता बतेमे सत्त्वा विषममतयो विषमाशया उत्पथगहनचारिणः। तेऽस्माभिर्भूतपथसम्यग्दृष्टिमार्गयाथातथ्ये प्रतिष्ठापयितव्याः। भिन्नविगृहीतचित्तविवादोपपन्ना बतेमे सत्त्वाः सततसमितं क्रोधोपनाह- 15 संधुक्षिताः। तेऽस्माभिरनुत्तरे महामैत्र्युपसंहारे प्रतिष्ठापयितव्याः। अतृप्ता बतेमे सत्त्वाः परवित्ताभिलाषिणो विषमाजीवानुचरिताः। तेऽस्माभिः परिशुद्धकायवाङ्मनस्कर्मान्ताजीवि-कायां प्रतिष्ठापयितव्याः। रागद्वेषमोहत्रिनिदानानुगता बतेमे सत्त्वा विविधक्लेशाग्निज्वालाभिः सततसमितं प्रदीप्ताः। न च ततोऽत्यन्तनिःसरणोपायं परिमार्गयन्ति। तेऽस्माभिः सर्वक्लेश-प्रशमे निरुपद्रवे निर्वाणे प्रतिष्ठापयितव्याः। महामोहतमस्तिमिरपटलाविद्यान्धकारावृता बतेमे 20 सत्त्वा महान्धकारगहनानुप्रविष्टाः प्रज्ञालोकसुदूरीभूता महान्धकारप्रस्कन्नाः कुदृष्टिकान्तार-समवसृताः। तेषामस्माभिरनावरणं प्रज्ञाचक्षुर्विशोधयितव्यं यथा सर्वधर्मयाथातथ्यापरप्रणयतां प्रतिलप्स्यन्ते। महासंसाराटवीकान्तारमार्गप्रपन्ना बतेमे सत्त्वा अयोगक्षेमिणोऽनाश्वासप्राप्ता महाप्रपातपतिता निरयतिर्यग्योनियमलोकगतिप्रपाताभिमुखाः कुदृष्टिविषमजालानुपर्यवनद्धा मोहगहनसंछन्ना मिथ्यामार्गविपथप्रयाता जात्यन्धीभूताः परिणायकविकला अनिःसरणे 25 निःसरणसंज्ञिनो नमुचिपाशबद्धा विषयतस्करोपगृहीताः कुशलपरिणायकविरहिता माराशय-गहनानुप्रविष्टा बुद्धाशयदूरीभूताः। तेऽस्माभिरेवंविधात् संसाराटवीकान्तारदुर्गादुत्तारयितव्या अभयपुरे च सर्वज्ञतानगरे निरुपद्रवे निरुपतापे प्रतिष्ठापयितव्याः। महौघोर्म्यामथैर्निमग्ना बतेमे सत्त्वाः कामभवाविद्यादृष्ट्योघसमवसृष्टाः संसारस्रोतोनुवाहिनस्तृष्णानदीप्रपन्ना महा-वेगग्रस्ता अविलोकनसमर्थाः कामव्यापादविहिंसावितर्कप्रतानानुचरिताः सत्कायदृष्ट्युदक- 30 राक्षसगृहीताः कामगहनावर्तानुप्रविष्टा नन्दीरागमध्यसंछन्ना अस्मिमानस्थलोत्सन्ना दौःशील्य-विषमाचारान्तःपुटीभूताः षडायतनग्रामभयतीरमनुच्चलिताः कुशलसंतारकविरहिता अनाथा

R 27 R 28 R 29

अपरायणा अशरणाः। तेऽस्माभिर्महाकरुणाकुशलमूलबलेनोद्धृत्य निरुपद्रवेऽरजसि क्षेमे शिवेऽभये सर्वभयत्रासापगते सर्वज्ञतारत्नद्वीपे प्रतिष्ठापयितव्याः। रुद्धा बतेमे सत्त्वा बहुदुःखदौर्मनस्योपायासबहुलेऽनुनयप्रतिघप्रियाप्रियविनिबन्धने सशोकपरिदेवानुचरिते तृष्णानिगडबन्धने मायाशाठ्याविद्यागहनसंछन्ने त्रैधातुकचारके। तेऽस्माभिः सर्वत्रैधातुकविवेके 5 सर्वदुःखोपशमेऽनावरणनिर्वाणे प्रतिष्ठापयितव्याः। आत्मात्मीयाभिनिविष्टा बतेमे सत्त्वाः स्कन्धालयानुचलिताश्चतुर्विपर्यासानुप्रयाताः षडायतनशून्यग्रामसंनिश्रिताश्चतुर्महाभूतोरगाभिद्रुताः स्कन्धवधकतस्कराभिघातिता अपरिमाणदुःखप्रतिसंवेदिनः। तेऽस्माभिः परमसुखे सर्वनिकेतविगमे प्रतिष्ठापयितव्या यदुत सर्वावरणप्रहाणनिर्वाणे। हीनलीनदीनाधिमुक्ता बतेमे सत्त्वा अग्र्यसर्वज्ञज्ञानचित्तविकलाः सति निःसरणे महायाने श्रावकप्रत्येकबुद्धयानाव-10 तीर्णमतयः। तेऽस्माभिरुदारबुद्धधर्ममतिविपुलाध्यालम्बेन सर्वज्ञज्ञानलोचनतया अनुत्तरे महायाने प्रतिष्ठापयितव्याः॥

इति हि भवन्तो जिनपुत्रा एवं शीलबलाधानानुगतस्य बोधिसत्त्वस्य कृपाकरुणामैत्र्यभिनिर्हारकुशलस्य सर्वसत्त्वानवधीष्टकल्याणमित्रस्यापरित्यक्तसर्वसत्त्वस्य क्रियाक्रियाभिनिर्हारकुशलस्य विमलायां बोधिसत्त्वभूमौ प्रतिष्ठितस्य बहवो बुद्धा आभासमागच्छन्ति.... R 30 15 औदारिक .... पेयालं .... परिणामयति। तांश्च तथागतानर्हतः सम्यक्संबुद्धान् पर्युपास्ते, तेषां च सकाशेभ्यो गौरवेणेमानेव दश कुशलान् कर्मपथान् प्रतिगृह्णाति, यथाप्रतिगृहीतांश्च नान्तरा प्रणाशयति। सोऽनेकान् कल्पाननेकानि कल्पशतानि अनेकानि कल्पसहस्राणि अनेकानि कल्पशतसहस्राणि अनेकानि कल्पनियुतशतसहस्रानि अनेककल्पकोटीरनेकानि कल्पकोटिशतानि अनेकानि कल्पकोटिशतसहस्रानि अनेकानि कल्पकोटिनियुतशतसहस्राणि 20 मात्सर्यदौःशील्यमलापनीततया त्यागशीलविशुद्धौ समुदागच्छति। तद्यथापि नाम भवन्तो जिनपुत्रास्तदेव जातरूपं कासीसप्रक्षिप्तं भूयस्या मात्रया सर्वमलापगतं भवति, एवमेव भवन्तो जिनपुत्रा बोधिसत्त्वोऽस्यां विमलायां बोधिसत्त्वभूमौ स्थितोऽनेकान् कल्पान् यावदनेकानि कल्पकोटिनियुतशतसहस्राणि मात्सर्यदौःशील्यमलापनीततया त्यागशीलविशुद्धौ समुदागच्छति। तस्य चतुर्भ्यः संग्रहवस्तुभ्यः प्रियवद्यता अतिरिक्ततमा भवति। दशभ्यः पारमिताभ्यः 25 शीलपारमिता अतिरिक्ततमा भवति। न च परिशेषासु न समुदागच्छति यथाबलं यथाभजमानम्॥

इयं भवन्तो जिनपुत्रा बोधिसत्त्वस्य विमला नाम द्वितीया बोधिसत्त्वभूमिः समासनिर्देशतः, यस्यां प्रतिष्ठितो बोधिसत्त्वो भूयस्त्वेन राजा भवति चक्रवर्ती चतुर्द्वीपाधिपतिधर्माधिपत्यप्रतिलब्धः सप्तरत्नसमन्वागतः कृती प्रभुः सत्त्वानां दौःशील्यमलविनिवर्तनाय 30 कुशलः सत्त्वान् दशसु कुशलेषु कर्मपथेषु प्रतिष्ठापयितुम्। यच्च किंचित् कर्मारभते...पेयालम्॥

विमला नाम द्वितीया भूमिः॥

---

१ See page 12. २ See page 14 and change °शतं to सहस्रं in expressions like समाधिशतं.

## ३ प्रभाकरी नाम तृतीया भूमिः ।

वज्रगर्भो बोधिसत्त्व आह—योऽयं भवन्तो जिनपुत्रा बोधिसत्त्वो द्वितीयायां बोधिसत्त्वभूमौ सुपरिशोधिताध्याशयस्तृतीयां बोधिसत्त्वभूमिमाक्रमति, स दशभिश्चित्ताशयमनस्कारैराक्रमति । कतमैर्दशभिः ? यदुत शुद्धचित्ताशयमनस्कारेण च स्थिरचित्ताशयमनस्कारेण च निर्विच्चित्ताशयमनस्कारेण च अविरागचित्ताशयमनस्कारेण च अविनिवर्तचित्ताशयमनस्कारेण च दृढचित्ताशयमनस्कारेण च उत्तप्तचित्ताशयमनस्कारेण च अतृप्तचित्ताशयमनस्कारेण च उदारचित्ताशयमनस्कारेण च माहात्म्यचित्ताशयमनस्कारेण च । एभिर्दशभिश्चित्ताशयमनस्कारैराक्रमति । स खलु पुनर्भवन्तो जिनपुत्रा बोधिसत्त्वस्तृतीयायां बोधिसत्त्वभूमौ स्थितोऽनित्यतां च सर्वसंस्कारगतस्य यथाभूतं प्रत्यवेक्षते, दुःखतां च अशुभतां च अनाश्वासिकतां च विप्रलोपतां च अचिरस्थितिकतां च क्षणिकोत्पादनिरोधतां च पूर्वान्तासंभवतां च अपरान्तासंक्रान्तितां च प्रत्युत्पन्नाव्यवस्थिततां च सर्वसंस्कारगतस्य प्रत्यवेक्षते । स एवंभूतं सर्वसंस्कारगतं संपश्यन्ननभिसरं निराक्रन्दं सशोकं सपरिदेवं सोपायासं प्रियाप्रियविनिबद्धं दुःखदौर्मनस्योपायासबहुलमसंनिचयभूतं रागद्वेषमोहाग्निसंप्रदीप्तमनेकव्याधिविवर्धितं च आत्मभावं संपश्यन् भूयस्या मात्रया सर्वसंस्कारेभ्यश्चित्तमुच्चालयति, तथागतज्ञाने च संप्रेषयति । स तथागतज्ञानस्याचिन्त्यतां च समनुपश्यति, अतुल्यतां च अप्रमेयतां च दुरासदतां च असंस्पृष्टतां च निरुपद्रवतां च निरुपायासतां च अभयपुरगमनीयतां च अपुनरावृत्तितां च बहुजनपरित्राणतां च समनुपश्यति । स एवमप्रमाणतां च तथागतज्ञानस्य समनुपश्यन् एवं बहूपद्रवतां च सर्वसंस्कारगतस्य व्युपपरीक्षमाणो भूयस्या मात्रया सत्त्वानामन्तिके दश चित्ताशयानुपस्थापयति । कतमान् दश ? यदुत अनाथात्राणाप्रतिशरणचित्ताशयतां च नित्यदरिद्रप्रतिशरणचित्ताशयतां च रागद्वेषमोहाग्निसंप्रदीप्तप्रतिशरणचित्ताशयतां च भवचारकावरुद्धप्रतिशरणचित्ताशयतां च सततसमितक्लेशगहनावृतप्रसुप्तप्रतिशरणचित्ताशयतां च विलोकनसमर्थप्रतिशरणचित्ताशयतां च कुशलधर्मच्छन्दरहितप्रतिशरणचित्ताशयतां च बुद्धधर्मप्रमुषितप्रतिशरणचित्ताशयतां च संसारस्रोतोनुवाहिप्रतिशरणचित्ताशयतां च मोक्षोपायप्रणष्टप्रतिशरणचित्ताशयतां च । इमान् दश चित्ताशयानुपस्थापयति ॥

स एवं बहूपद्रवं सत्त्वधातुं समनुपश्यन् एवं वीर्यमारभते—मयैवैते सत्त्वाः परित्रातव्याः परिमोचयितव्याः परितोषयितव्याः संरोपयितव्या विनेतव्याः परिनिर्वापयितव्या इति । स एवं निर्विदनुगतश्च सर्वसंस्कारगत्या उपेक्षानुगतश्च सर्वसत्त्वेषु अनुशंसानुगतश्च सर्वज्ञज्ञाने तथागतज्ञानप्रतिशरणः सर्वसत्त्वपरित्राणायाभियुक्तः एवं व्युपपरीक्षते—कतमेन खलु उपायमार्गेण शक्या इमे सत्त्वा एवं बहुदुःखोपक्लेशप्रपतिता अभ्युद्धर्तुम्, अत्यन्तसुखे च निर्वाणे प्रतिष्ठापयितुम्, सर्वधर्मनिःसंशयतां चानुप्रापयितुमिति ?

तस्य बोधिसत्त्वस्यैवं भवति—नान्यत्र अनावरणविमोक्षज्ञानस्थानात् । तच्च अनावरणज्ञानविमोक्षस्थानं नान्यत्र सर्वधर्मयथावदवबोधात् । स च सर्वधर्मयथावदवबोधो नान्यत्र अप्रचारानुत्पादचारिण्याः प्रज्ञायाः । स च प्रज्ञालोको नान्यत्र ध्यानकौशल्यविनिश्चयबुद्धिप्रत्यवेक्षणात् । तच्च ध्यानकौशल्यविनिश्चयबुद्धिप्रत्यवेक्षणं नान्यत्र श्रुतकौशल्यादिति ॥

स एवं प्रत्यवेक्षितज्ञानो भूयस्या मात्रया सद्धर्मपर्येषणाभियुक्तो विहरति । रात्रिंदिवं धर्मश्रवणार्थिको धर्मकामातृप्ताप्रतिप्रस्रब्धो बुद्धधर्मपर्येष्टिहेतोः । धर्मारामो धर्मरतो धर्मप्रतिशरणो धर्मनिम्नो धर्मप्रवणो धर्मप्राग्भारो धर्मपरायणो धर्मलयनो धर्मत्राणो धर्मानुधर्मचारी । स एवं बुद्धधर्मपर्येषणाभियुक्तो नास्ति तत्किंचिद् द्रव्यवित्तजातं वा धनधान्यकोशकोष्ठागारजातं

R 33 5 वा हिरण्यसुवर्णमणिमुक्तावज्रवैडूर्यशङ्खशिलाप्रवालजातरूपरजतजातं वा यावत्सर्वाङ्गप्रत्यङ्गपरित्यागो वा यन्न परित्यजति तया धर्मकामतया । न च तस्माद्दुष्करसंज्ञी भवति अन्यत्र तस्मिन्नेव धर्मभाणकपुद्गले दुष्करसंज्ञी भवति योऽस्यैकधर्मपदमपि देशयति । स धर्महेतोर्नास्ति तत्किंचिदुपात्तं बाह्यं वस्तु यन्न परित्यजति । नास्ति तत्किंचिदाध्यात्मिकं वस्तु यन्न परित्यजति । नास्ति तत्किंचिद्गुरुपरिचर्योपस्थानं यन्नोपादत्ते । नास्ति सा

10 काचिद् मानाभिमानोत्सर्गनिर्माणोपचारता यां नोपादत्ते । नास्ति सा काचित्कायिकी पीडा यां नोपादत्ते । स चित्रो भवत्यश्रुतधर्मपदश्रवणेन, न त्वेव त्रिसाहस्रमहासाहस्रलोकधातुप्रतिमेन रत्नराशिप्रतिलम्भेन । स चित्रो भवत्येकसुभाषितगाथाश्रवणेन न त्वेव चक्रवर्तिराज्यप्रतिलम्भेन । स चित्रो भवत्यश्रुतधर्मपदश्रवणेन बोधिसत्त्वचर्यापरिशोधनेन न त्वेव शक्रत्वब्रह्मत्वप्रतिलम्भेन बहुकल्पशतसहस्रपर्यवसानेन । सचेदिदं कश्चिदेवं ब्रूयात्—एवमहं

15 तुल्यमिदं धर्मपदं सम्यक्संबुद्धोपनीतं बोधिसत्त्वचर्यापरिशोधनं संश्रावयेयम्, सचेत्त्वं महत्यामग्निखदायां संप्रज्वलितायामेकज्वालीभूतायामात्मानं प्रपातयेः, महान्तं च दुःखवेदनोपक्रमं स्वशरीरेणोपादद्या इति । तस्यैवं भवति—उत्सहेऽहमेकस्यापि धर्मपदस्य सम्यक्संबुद्धोपनीतस्य बोधिसत्त्वचर्यापरिशोधनस्यार्थाय त्रिसाहस्रमहासाहस्रलोकधाताविग्निपरिपूर्णे ब्रह्मलोकादात्मानमुत्स्रष्टुम्, किं पुनः प्राकृतायां अग्निखदायाम् । अपि तु खलु

20 पुनः सर्वैर्निरयापायदुःखसंवासैरप्यस्माभिर्बुद्धधर्माः पर्येषितव्याः, किं पुनर्मनुष्यदुःखसंवासैरिति । स एवंरूपेण वीर्यारम्भेण धर्मान् पर्येषते । यथाश्रुतेषु धर्मेषु च योनिशः प्रत्यवक्षेणजातीयो भवति । तांश्च धर्मान् श्रुत्वा स्वचित्तनिध्यप्त्या एको रहोगत एवं मीमांसते—धर्मानुधर्मप्रतिपत्त्या इमे बुद्धधर्मा अनुगन्तव्या न केवलं वाक्कर्मपरिशुद्धयेति । सोऽस्यां प्रभाकर्यां बोधिसत्त्वभूमौ स्थितो बोधिसत्त्वो धर्मानुधर्मप्रतिपत्तिहेतोर्विविक्तं

R 34 25 कामैर्विविक्तं पापकैरकुशलधर्मैः सवितर्कं सविचारं विवेकजं प्रीतिसुखं प्रथमं ध्यानमुपसंपद्य विहरति । स वितर्कविचाराणां व्युपशमादध्यात्मसंप्रसादाच्चेतस एकोतीभावादवितर्कमविचारं समाधिजं प्रीतिसुखं द्वितीयं ध्यानमुपसंपद्य विहरति । स प्रीतेर्विरागादुपेक्षको विहरति स्मृतिमान् संप्रजानन् । सुखं च कायेन प्रतिसंवेदयति यत्तदार्या आचक्षन्ते—उपेक्षकः स्मृतिमान् । सुखविहारी निष्प्रीतिकं तृतीयं ध्यानमुपसंपद्य विहरति ।

30 स सुखस्य च प्रहाणाद्दुःखस्य च प्रहाणात्पूर्वमेव च सौमनस्यदौर्मनस्ययोरस्तंगमाददुःखासुखमुपेक्षास्मृतिपरिशुद्धं चतुर्थं ध्यानमुपसंपद्य विहरति । स सर्वशो रूपसंज्ञानां समतिक्रमात् प्रतिघसंज्ञानामस्तंगमान्नानात्वसंज्ञानाममनसिकारादनन्तकमाकाशमित्याकाशानन्त्याय-

तनमुपसंपद्य विहरति। स सर्वश आकाशानन्त्यायतनसमतिक्रमादनन्तं विज्ञानमिति विज्ञानानन्त्यायतनमुपसंपद्य विहरति। स सर्वशो विज्ञानानन्त्यायतनसमतिक्रमान्नास्ति किंचिदित्याकिंचन्यायतनमुपसंपद्य विहरति। स सर्वश आकिंचन्यायतनसमतिक्रमान्नैव-संज्ञानासंज्ञायतनमुपसंपद्य विहरति तेनानभिरतिपदस्थानेन नान्यत्र धर्मानुधर्मप्रति-पत्तिमुपादाय॥ 5

स मैत्रीसहगतेन चित्तेन विपुलेन महद्गतेनाद्वयेनाप्रमाणेनावैरेणासपत्नेनानावरणे-नाव्याबाधेन सर्वत्रानुगतेन धर्मधातुपरमे लोके आकाशधातुपर्यवसाने सर्वावन्तं लोकं स्फरित्वोपसंपद्य विहरति। एवं करुणासहगतेन चित्तेन। मुदितासहगतेन चित्तेन। उपेक्षासहगतेन चित्तेन विहरति॥

सोऽनेकविधां ऋद्धिविधिं प्रत्यनुभवति। पृथिवीमपि कम्पयति। एकोऽपि भूत्वा 10 बहुधा भवति। बहुधापि भूत्वैको भवति। आविर्भावं तिरोभावमपि प्रत्यनुभवति। तिरः-कुड्यं तिरःप्राकारं पर्वतमप्यसज्जन् गच्छति तद्यथापि नाम आकाशे। आकाशेऽपि पर्यङ्केन क्रामति तद्यथापि नाम पक्षिशकुनिः। पृथिव्यामप्युन्मज्जननिमज्जनं करोति तद्यथापि R 35 नाम उदके। उदकेऽप्यमज्जन्[1] गच्छति तद्यथापि पृथिव्याम्। धूमयति प्रज्वलति, तद्यथापि नाम महानग्निस्कन्धः। स्वकायादपि[2] महावारिधारा उत्सृजति तद्यथापि नाम महामेघः। 15 याभिर्वारिधाराभिरयं त्रिसाहस्रमहासाहस्रो लोकधातुरादीप्तः प्रदीप्तः संप्रज्वलितोऽग्निना एकज्वालीभूतो निर्वाप्यते। इमावपि चन्द्रसूर्यावेवंमहर्द्धिकौ एवंमहानुभावौ पाणिना परा-मृशति परिमार्ष्टि यावद्ब्रह्मलोकमपि कायेन वशं वर्तयति॥

स दिव्येन श्रोत्रधातुना [विशुद्धेना]तिक्रान्तमानुष्यकेन उभयान् शब्दान् शृणोति दिव्यान् मानुष्यकान्; सूक्ष्मानौदारिकांश्च। ये दूरेऽन्तिके वा अन्तशो दंश- 20 मशककीटमक्षिकाणामपि शब्दान् शृणोति। [एषा दिव्यश्रोत्राभिज्ञा]॥

स परसत्त्वानां परपुद्गलानां चेतसैव चित्तं यथाभूतं प्रजानाति। सरागं चित्तं सरागचित्तमिति यथाभूतं प्रजानाति। विरागं चित्तं विरागचित्तमिति प्रजानाति। सदोषं... विगतदोषं....समोहं....विगतमोहं....सक्लेशं....निःक्लेशं...परीत्तं..... विपुलं.... महद्गतं.... अप्रमाणं....संक्षिप्तं.... [विस्तीर्णं].... समाहितं.... असमाहितं.... विमुक्तं.... अविमुक्तं.... 25 साङ्गनम्...अनङ्गनम्...औदारिकं चित्तमौदारिकचित्तमिति यथाभूतं प्रजानाति। अनौदारिकं चित्तमनौदारिकं चित्तमिति यथाभूतं प्रजानाति। इति परसत्त्वानां परपुद्गलानां चेतसैव चित्तं यथाभूतं प्रजानाति। [इत्येषा परचित्तज्ञानाभिज्ञा]॥

सोऽनेकविधं पूर्वनिवासमनुस्मरति। एकामपि जातिमनुस्मरति। द्वे तिस्रश्चतस्रः पञ्च दश विंशतिः त्रिंशतं चत्वारिंशतं पञ्चाशतं जातिशतमनुस्मरति। अनेकान्यपि जाति- 30

---

१ R असज्जन्. २ R उदकमपि कायात्प्रमुञ्चति येन वारिणा for स्वकायादपि...वारिधाराभिः.

शतानि। अनेकान्यपि जातिशतसहस्राणि। संवर्तकल्पमपि विवर्तकल्पमपि। अनेकानपि संवर्तविवर्तकल्पानप्यनुस्मरति। कल्पशतमपि कल्पसहस्रमपि कल्पशतसहस्रमपि कल्पकोटीमपि कल्पकोटीशतमपि कल्पकोटीसहस्रमपि कल्पकोटीशतसहस्रमपि यावदनेकान्यपि कल्पकोटीनियुतशतसहस्राण्यनुस्मरति—अमुत्राहमासं एवंनामा। एवंगोत्रः एवंजातिः 5 एवमाहार एवमायुःप्रमाणः एवं चिरस्थितिकः एवं सुखदुःखप्रतिसंवेदी। सोऽहं ततश्च्युतोऽत्रोपपन्नः। ततश्च्युत इहोपपन्नः। इति साकारं सोद्देशं सनिमित्तमनेकविधं पूर्वनिवासमनुस्मरति। [ एषा पूर्वनिवासानुस्मृत्यभिज्ञा ] ॥

R 36 स दिव्येन चक्षुषा विशुद्धेनातिक्रान्तमानुष्यकेण सत्त्वान् पश्यति च्यवमानानुपपद्यमानान् सुवर्णान् दुर्वर्णान् सुगतान् दुर्गतान् प्रणीतान् हीनान्। यथाकर्मोपगान् सत्त्वान् 10 यथाभूतं प्रजानाति—इमे भवन्तः सत्त्वाः कायदुश्चरितेन समन्वागता वाग्दुश्चरितेन समन्वागता [ मनोदुश्चरितेन समन्वागताः ]। आर्याणामपवादका मिथ्यादृष्टयः मिथ्यादृष्टिकर्मसमादानहेतोस्तद्धेतुं तत्प्रत्ययं कायस्य भेदात्परं मरणादपायदुर्गतिविनिपातनिरयेषूपपद्यन्ते। इमे पुनर्भवन्तः सत्त्वाः कायसुचरितेन समन्वागता [ वाक्सुचरितेन समन्वागता मनःसुचरितेन समन्वागता ] आर्याणामनपवादकाः। सम्यग्दृष्टिकर्मसमादानहेतोस्तद्धेतुं तत्प्रत्ययं कायस्य 15 भेदात् परं मरणात्सुगतौ स्वर्गे देवलोकेषूपपद्यन्त इति [ प्रजानाति। एवं ] दिव्येन चक्षुषा विशुद्धेनातिक्रान्तमनुष्येण साकारं सोद्देशं सनिमित्तं सत्त्वान् पश्यति। च्यवमानानुपपद्यमानान्...यथाभूतं पश्यति ॥

स इमानि ध्यानानि विमोक्षान् समाधीन् समापत्तीश्च समापद्यते, व्युत्तिष्ठते। न च तेषां वशेनोपपद्यतेऽन्यत्र यत्र बोध्यङ्गपरिपूरिं पश्यति तत्र संचिन्त्य प्रणिधानवशेनो- 20 पपद्यते। तत्कस्य हेतोः? तथा हि तस्य बोधिसत्त्वस्योपायकौशल्याभिनिर्हृता चित्तसंततिः ॥

तस्य अस्यां प्रभाकर्यां बोधिसत्त्वभूमौ स्थितस्य बोधिसत्त्वस्य बहवो बुद्धा आभासमागच्छन्ति। पेयालं। परिणामयति। तांश्च तथागतानर्हतः सम्यक्संबुद्धान् पर्युपास्ते। तेषां च धर्मदेशनां सत्कृत्य शृणोति उद्गृह्णाति धारयति। श्रुत्वा च यथाभजमानं प्रतिपत्त्या समादयति। स सर्वधर्माणामसंक्रान्तितां च अविनाशितां च प्रतीत्य प्रत्ययतया 25 व्यवलोकयति ॥

तस्य भूयस्या मात्रया सर्वाणि कामबन्धनानि तनूनि भवन्ति। सर्वाणि रूपबन्धनानि सर्वाणि भवबन्धनानि सर्वाण्यविद्याबन्धनानि तनूनि भवन्ति। दृष्टिकृतबन्धनानि च R 37 पूर्वमेव प्रहीणानि भवन्ति। तस्य अस्यां प्रभाकर्यां बोधिसत्त्वभूमौ स्थितस्य बोधिसत्त्वस्य... पेयालं...अनुपचयं मिथ्यारागः प्रहाणं गच्छति, अनुपचयं मिथ्यादोषः प्रहाणं गच्छति, अनुपचयं 30 मिथ्यामोहः प्रहाणं गच्छति। तानि चास्य कुशलमूलान्युत्तप्यन्ते परिशुद्ध्यन्ति कर्मण्यानि

१ See page 12.

च भवन्ति। तद्यथापि नाम भवन्तो जिनपुत्रास्तदेव जातरूपं कुशलस्य कर्मारस्य हस्तगतं तुल्यधरणमेव प्रमाणेनावतिष्ठते, एवमेव भवन्तो जिनपुत्रा बोधिसत्त्वस्य अस्यां प्रभाकर्यां बोधिसत्त्वभूमौ स्थितस्य अनेकान् कल्पान् यावदनेकानि कल्पकोटिनियुतशतसहस्राणि.... प्रहाणं गच्छन्ति। तस्य भूयस्या मात्रया क्षान्तिसौरत्याशयता च परिशुद्ध्यति, साखिल्यमाधुर्याशयता च अकोप्याशयता च अक्षुभिताशयता च अलुभिताशयता च अनुन्नामावनामाशयता 5 च सर्वकृतप्रतिकृतानां निःकाङ्क्षाशयता च सत्त्वकृतप्रतिकृतानां काङ्क्षाशयता च अशाठ्यमायाविताशयता च अगहनाशयता च परिशुद्ध्यति। तस्य चतुर्भ्यः संग्रहवस्तुभ्योऽर्थचर्या अतिरिक्ततमा भवति। दशभ्यः पारमिताभ्यः क्षान्तिपारमिता अतिरिक्ततमा भवति। न च परिशेषासु न समुदागच्छति यथाबलं यथाभजमानम्। इयं भवन्तो जिनपुत्रा बोधिसत्त्वस्य प्रभाकरी नाम तृतीया बोधिसत्त्वभूमिः समासनिर्देशतः, यस्यां प्रतिष्ठितो बोधिसत्त्वो भूय- 10 स्त्वेन इन्द्रो भवति देवराजस्त्रिदशाधिपतिः कृती प्रभुः सत्त्वानां कामरागविनिवर्तनोपायोपसंहाराय कुशलः सत्त्वान् कामपङ्कादभ्युद्धर्तुम्, यच्च किंचित्[1]....पेयालं....यथारूपेण वीर्यारम्भेण एकक्षणलवमुहूर्तेन समाधिशतसहस्रं च प्रतिलभते[2]...॥

प्रभाकरी नाम तृतीया भूमिः॥



१ See page 14. २ See page 14 changing °शतं for °शतसहस्रं.

## ४ अर्चिष्मती नाम चतुर्थी भूमिः ।

वज्रगर्भ आह—योऽयं भवन्तो जिनपुत्रा बोधिसत्त्वस्तृतीयायां बोधिसत्त्वभूमौ सुपरिशुद्धालोकश्चतुर्थीं बोधिसत्त्वभूमिमाक्रमति, स दशभिर्धर्मालोकप्रवेशैराक्रमति । कतमैर्दशभिः ? यदुत सत्त्वधातुविचारणालोकप्रवेशेन च लोकधातुविचरणालोकप्रवेशेन च धर्मधातु-<br>5 विचारणालोकप्रवेशेन आकाशधातुविचारणालोकप्रवेशेन च विज्ञानधातुविचारणा लोकप्रवेशेन च कामधातुविचरणालोकप्रवेशेन च रूपधातुविचरणालोकप्रवेशेन च आरूप्यधातुविचरणालोकप्रवेशेन उदाराशयाधिमुक्तिधातुविचरणालोकप्रवेशेन च माहात्म्याशयाधिमुक्तिधातुविचरणालोकप्रवेशेन । एभिर्दशभिर्धर्मालोकप्रवेशैराक्रमति ॥

R 38

तत्र भवन्तो जिनपुत्रा अर्चिष्मत्या बोधिसत्त्वभूमेः सहप्रतिलम्भेन बोधिसत्त्वः<br>10 संवृत्तो भवति तथागतकुले तदात्मकधर्मप्रतिलम्भाय दशभिर्ज्ञानपरिपाचकैर्धर्मैः । कतमैर्दशभिः? यदुत अप्रत्युदावर्त्याशयतया च त्रिरत्नाभेद्यप्रसादनिष्ठागमनतया च संस्कारोदयव्ययविभावनतया च स्वभावानुत्पत्त्याशयतया च लोकप्रवृत्तिनिवृत्त्याशयतया च कर्मभवोपपत्त्याशयतया च संसारनिर्वाणाशयतया च सत्त्वक्षेत्रकर्माशयतया च पूर्वान्तापरान्ताशयतया अभावक्षयाशयतया च । एभिर्भवन्तो जिनपुत्रा दशभिर्ज्ञानपरिपाचकैर्धर्मैः समन्वागतो<br>15 बोधिसत्त्वः संवृत्तो भवति तथागतकुले तदात्मकधर्मप्रतिलम्भाय । स खलु पुनर्भवन्तो जिनपुत्रा बोधिसत्त्वोऽस्यामर्चिष्मत्यां बोधिसत्त्वभूमौ प्रतिष्ठितोऽध्यात्मं काये कायानुदर्शी विहरति आतापी संप्रजानन् स्मृतिमान् विनीय लोकेऽभिध्यादौर्मनस्ये बहिर्धा काये... अध्यात्मं बहिर्धा काये । एवमेवाध्यात्मं वेदनासु बहिर्धा वेदनासु अध्यात्मं बहिर्धा वेदनासु । एवमध्यात्मं चित्ते बहिर्धा चित्तेऽध्यात्मं बहिर्धा चित्ते । अध्यात्मं धर्मेषु धर्मानुदर्शी...<br>20 बहिर्धा धर्मेषु धर्मानुदर्शी...एवमध्यात्मं बहिर्धा धर्मेषु... । सोऽनुत्पन्नानां पापकानामकुशलानां धर्माणामनुत्पादाय च्छन्दं जनयति व्यायच्छते वीर्यमारभते चित्तं प्रगृह्णाति सम्यक्प्रणिदधाति । उत्पन्नानां पापकानामकुशलानां धर्माणां प्रहाणाय...। अनुत्पन्नानां कुशलानां धर्माणामुत्पादाय....। उत्पन्नानां कुशलानां धर्माणां स्थितयेऽसंप्रमोषाय वैपुल्याय भूयोभावाय भावनाय परिपूरये...। छन्दसमाधिप्रहाणसंस्कारसमन्वागतं ऋद्धिपादं भावयति<br>25 विवेकनिश्रितं विरागनिश्रितं निरोधनिश्रितं व्यवसर्गपरिणतं वीर्यपरिणतं चित्तपरिणतं मीमांसापरिणतम् । स श्रद्धेन्द्रियं भावयति विवेकनिश्रितं...वीर्येन्द्रियं...स्मृतीन्द्रियं... समाधीन्द्रियं...प्रज्ञेन्द्रियं...स । श्रद्धाबलं भावयति...वीर्यबलं...स्मृतिबलं...समाधिबलं...प्रज्ञाबलं... । स्मृतिसंबोध्यङ्गं भावयति, धर्मप्रविचय...वीर्य...प्रीति...प्रस्रब्धि... समाधि...उपेक्षा... । सम्यग्दृष्टिं भावयति...सम्यक्संकल्पं...सम्यग्वाचं...सम्य-<br>30 क्कर्मान्तं...सम्यगाजीवं...सम्यग्व्यायामं...सम्यक्स्मृतिं...सम्यक्समाधिं... ॥

R 39

तच्च सर्वसत्त्वसापेक्षतया च पूर्वप्रणिधानाभिनिर्हारोपस्तब्धतया च महाकरुणापूर्वंगमतया च महामैत्र्युपेततया च सर्वज्ञज्ञानाध्यालम्बनतया च बुद्धक्षेत्रविठपनालंकाराभिनिर्हारतया च तथागतबलवैशारद्यावेणिकबुद्धधर्मलक्षणानुव्यञ्जनस्वरघोषसंपदभिनिर्हारतया च उत्तरोत्तरवैशेषिकधर्मपरिमार्गणतया च गम्भीरबुद्धधर्मविमोक्षश्रवणानुगमनतया च

महोपायकौशल्यबलविचारणतया च। तस्य खलु पुनर्भवन्तो जिनपुत्रा बोधिसत्त्वस्य अस्यामर्चिष्मत्यां बोधिसत्त्वभूमौ स्थितस्य यानीमानि सत्कायदृष्टिपूर्वंगमानि आत्मसत्त्वजीवपोषपुद्गलस्कन्धधात्वायतनाभिनिवेशसमुच्छ्रितानि उन्मिञ्जितानि निमिञ्जितानि विचिन्तितानि वितर्कितानि केलायितानि ममायितानि धनायितानि निकेतस्थानानि, तानि सर्वाणि विगतानि भवन्ति स्म। स यानीमानि कर्माण्यकरणीयानि सम्यक्संबुद्धविवर्णितानि संक्लेशोपसंहितानि, तानि सर्वेण सर्वं प्रजहाति। यानि चेमानि कर्माणि करणीयानि सम्यक्संबुद्धप्रशस्तानि बोधिमार्गसंभारानुकूलानि, तानि समादाय वर्तते। स भूयस्या मात्रया यथा यथोपायप्रज्ञाभिनिर्हृतानि मार्गसमुदागमाय मार्गाङ्गानि भावयति, तथा तथा स्निग्धचित्तश्च भवति, मृदुचित्तश्च कर्मण्यचित्तश्च हितसुखावहचित्तश्च अपरिक्लिष्टचित्तश्च उत्तरोत्तरविशेषपरिमार्गणचित्तश्च ज्ञानविशेषणाभिलाषचित्तश्च सर्वजगत्परित्राणचित्तश्च गुरुगौरवानुकूलचित्तश्च यथाश्रुतधर्मप्रतिपत्तिचित्तश्च भवति। स कृतज्ञश्च भवति, कृतवेदी च सूरतश्च सुखसंवासश्च ऋजुश्च मृदुश्च अगहनचारी च निर्मायनिर्माणश्च सुवचाश्च प्रदक्षिणग्राही च भवति। स एवं क्षमोपेत एवं दमोपेत एवं शमोपेत एवं क्षमदमशमोपेत उत्तराणि भूमिपरिशोधकानि मार्गाङ्गानि मनसि कुर्वाणः समुदाचरन् अप्रस्रब्धवीर्यश्च भवति अपरिक्लिष्टः। अप्रत्युदावर्त्यवीर्यश्च विपुलवीर्यश्च अनन्तवीर्यश्च उत्तप्तवीर्यश्च असमवीर्यश्च असंहार्यवीर्यश्च सर्वसत्त्वपरिपाचनवीर्यश्च नयानयविभक्तवीर्यश्च भवति। तस्य भूयस्या मात्रया आशयधातुश्च विशुद्ध्यति, अध्याशयधातुश्च न विप्रवसति, अधिमुक्तिधातुश्चोत्तप्यते, कुशलमूलविवृद्धिश्चोपजायते, लोकमलकषायता चापगच्छति, सर्वसंशयविमतिसंदेहाश्चास्योच्छिद्यन्ते, निष्काङ्क्षाभिमुखता च परिपूर्यते, प्रीतिप्रस्रब्धी च समुदागच्छति, तथागताधिष्ठानं चाभिमुखीभवति, अप्रमाणचित्ताशयता च समुदागच्छति॥

तस्य अस्यामर्चिष्मत्यां बोधिसत्त्वभूमौ स्थितस्य बोधिसत्त्वस्य[१]....पेयालं ....। भूयस्त्वेन च तेषां तथागतानां शासने प्रव्रजति। तस्य भूयस्या मात्रया आशयाध्याशयाधिमुक्तिसमता विशुध्यति। तस्य अस्यामर्चिष्मत्यां बोधिसत्त्वभूमौ स्थितस्य बोधिसत्त्वस्य[२]....आशयाध्याशयाधिमुक्तिसमताविशुद्धिस्तिष्ठति, तानि चास्य कुशलमूलानि सूत्तप्तानि प्रभास्वरतराणि च भवन्ति। तद्यथापि नाम भवन्तो जिनपुत्रास्तदेव जातरूपं कुशलेन कर्मारेणाभरणीकृतमसंहार्यं भवति तदन्यैरकृताभरणैर्जातरूपैः, एवमेव भवन्तो जिनपुत्रा बोधिसत्त्वस्य अस्यामर्चिष्मत्यां बोधिसत्त्वभूमौ स्थितस्य तानि कुशलमूलान्यसंहार्याणि भवन्ति तदन्येषामधरभूमिस्थितानां बोधिसत्त्वानां कुशलमूलैः। तद्यथापि नाम भवन्तो जिनपुत्रा मणिरत्नं जातप्रभं

१ See page 12. २ See page 12.

परिशुद्धरश्मिमण्डलमालोकप्रमुक्तमसंहार्यं भवति तदन्यैरपि शुद्धप्रभै रत्नजातैः, अनाच्छेद्य-प्रभं च भवति सर्वमारुतोदकप्रवर्षैः, एवमेव भवन्तो जिनपुत्रा बोधिसत्त्वोऽस्यामर्चिष्मत्यां बोधिसत्त्वभूमौ स्थितः सन्नसंहार्यो भवति तदन्यैरधरभूमिस्थितैर्बोधिसत्त्वैः, अनाच्छेद्यज्ञानश्च भवति सर्वमारक्लेशसमुदाचारैः। तस्य चतुर्भ्यः संग्रहवस्तुभ्यः समानार्थता अतिरिक्ततमा भवति।
5 दशभ्यः पारमिताभ्यो वीर्यपारमिता अतिरिक्ततमा भवति, न च परिशेषासु न समुदागच्छति यथाबलं यथाभजमानम्। इयं भवन्तो जिनपुत्रा बोधिसत्त्वस्यार्चिष्मती नाम चतुर्थी भूमिः समासनिर्देशतः, यस्यां प्रतिष्ठितो बोधिसत्त्वो भूयस्त्वेन सुयामो भवति देवराजः कृती प्रभुः सत्त्वानां सत्कायदृष्टिसमुद्घाताय कुशलः सत्त्वान् सम्यग्दर्शने प्रतिष्ठापयितुम्। यच्च किंचित्........॥

अर्चिष्मती नाम चतुर्थी भूमिः॥



[1] See page 14 changing °शतं to °कोटीशतं.

# ५ सुदुर्जया नाम पञ्चमी भूमिः ।

वज्रगर्भ आह—योऽयं भवन्तो जिनपुत्रा बोधिसत्त्वश्चतुर्थ्यां बोधिसत्त्वभूमौ सुपरिपूर्णमार्गः पञ्चमीं बोधिसत्त्वभूमिमवतरति, स दशभिश्चित्ताशयविशुद्धिसमताभिरवतरति । R 42
कतमाभिर्दशभिः ? यदुत अतीतबुद्धधर्मविशुद्ध्याशयसमतया च अनागतबुद्धधर्मविशुद्ध्याशयसमतया च प्रत्युत्पन्नबुद्धधर्मविशुद्ध्याशयसमतया च शीलविशुद्ध्याशयसमतया च चित्त- 5
विशुद्ध्याशयसमतया च दृष्टिकाङ्क्षाविमतिविलेखापनयनविशुद्ध्याशयसमतया च मार्गामार्गज्ञानविशुद्ध्याशयसमतया च प्रतिपत्प्रहाणज्ञानविशुद्ध्याशयसमतया च सर्वबोधिपक्ष्यधर्मोत्तरोत्तरविभावनविशुद्ध्याशयसमतया च सर्वसत्त्वपरिपाचनविशुद्ध्याशयसमतया च ।
आभिर्दशभिश्चित्ताशयविशुद्धिसमताभिरवतरति । स खलु पुनर्भवन्तो जिनपुत्रा बोधिसत्त्वः पञ्चमीं बोधिसत्त्वभूमिमनुप्राप्तः एषामेव बोधिपक्ष्याणां मार्गाङ्गानां सुपरिकर्मकृतत्वात्सुपरिशोधि- 10
ताध्याशयत्वाच्च भूय उत्तरकालमार्गविशेषमभिप्रार्थयमानस्तथत्वानुप्रतिपन्नश्च प्रणिधानबलाधानतश्च कृपामैत्रीभ्यां सर्वसत्त्वापरित्यागतश्च पुण्यविज्ञानसंभारोपचयतश्च अप्रतिप्रस्रब्धितश्च उपायकौशल्याभिनिर्हारतश्च उत्तरोत्तरभूम्यवभासालोचनतश्च तथागताधिष्ठानसंप्रत्येषणतश्च स्मृतिमतिगतिबुद्धिबलाधानतश्च अप्रत्युदावर्तनीयमनसिकारो भूत्वा इदं दुःखमार्यसत्यमिति यथाभूतं प्रजानाति । अयं दुःखसमुदयः आर्यसत्यमिति यथाभूतं प्रजानाति । अयं दुःख- 15
निरोधः आर्यसत्यमिति यथाभूतं प्रजानाति । इयं दुःखनिरोधगामिनी प्रतिपदार्यसत्यमिति यथाभूतं प्रजानाति । स संवृतिसत्यकुशलश्च भवति । परमार्थसत्यकुशलश्च भवति । लक्षणसत्यकुशलश्च भवति । विभागसत्यकुशलश्च भवति । निस्तीरणसत्यकुशलश्च भवति । वस्तुसत्यकुशलश्च भवति । प्रभवसत्यकुशलश्च भवति । क्षयानुत्पादसत्यकुशलश्च भवति ।
मार्गज्ञानावतारसत्यकुशलश्च भवति । सर्वबोधिसत्त्वभूमिक्रमानुसंधिनिष्पादनतया यावत्तथा- 20
गतज्ञानसमुदयसत्यकुशलश्च भवति । स परसत्त्वानां यथाशयसंतोषणात्संवृतिसत्यं प्रजानाति ।
एकनयसमवसरणात्परमार्थसत्यं प्रजानाति । स्वसामान्यलक्षणानुबोधाल्लक्षणसत्यं प्रजानाति ।
धर्मविभागव्यवस्थानानुबोधाद्विभागसत्यं प्रजानाति । स्कन्धधात्वायतनव्यवस्थानानुबोधान्निस्तीरणसत्यं प्रजानाति । चित्तशरीरप्रपीडनोपनिपातितत्वाद्वस्तुसत्यम्, गतिसंधिसंबन्धनत्वात्प्र- R 43
भवसत्यम्, सर्वज्वरपरिदाहात्यन्तोपशमात्क्षयानुत्पादसत्यम्, अद्वयानुत्पादसत्यम्, अद्वयाभि- 25
निर्हारान्मार्गज्ञानावतारसत्यम्, सर्वाकाराभिसंबोधित्सर्वबोधिसत्त्वभूमिक्रमानुसंधिनिष्पादनतया यावत्तथागतज्ञानसमुदयसत्यं प्रजानाति अधिमुक्तिज्ञानबलाधानान्न खलु पुनर्निरवशेषज्ञानात् ॥

स एवं सत्यकौशल्यज्ञानाभिनिर्हृतया बुद्ध्या सर्वसंस्कृतं रिक्तं तुच्छं मृषा मोषधर्म अविसंवादकं बालालापनमिति यथाभूतं प्रजानाति । तस्य भूयस्या मात्रया सत्त्वेषु महाकरुणा अभिमुखीभवति, महामैत्र्यालोकश्च प्रादुर्भवति ॥ 30

स एवं ज्ञानबलाधानप्राप्तः सर्वसत्त्वसापेक्षो बुद्धज्ञानाभिलाषी पूर्वान्तापरान्तं सर्वसंस्कारगतस्य प्रत्यवेक्षते यथा पूर्वान्ततोऽविद्याभवतृष्णाप्रसृतानां सत्त्वानां संसार-

स्रोतोऽनुवाहिनां स्कन्धालयानुच्छलितानां दुःखस्कन्धो विवर्धते, निरात्मा निःसत्त्वो निर्जीवो निष्पोषो निष्पुद्गल आत्मात्मीयविगतः, तं यथाभूतं प्रजानाति। यथा च अनागतस्यैव असत्संमोहाभिलाषस्य व्यवच्छेदः पर्यन्तो निःसरणं नास्त्यस्ति च, तच्च यथाभूतं प्रजानाति ॥

तस्यैवं भवति—आश्चर्यं यावदज्ञानसंमूढा बतेमे बालपृथग्जनाः, येषामसंख्येया 5 आत्मभावा निरुद्धाः, निरुध्यन्ते निरोत्स्यन्ते च। एवं च क्षीयमाणाः काये न निर्विदमुत्पादयन्ति। भूयस्या मात्रया दुःखयन्त्रं विवर्धयन्ति। संसारस्रोतसश्च महाभयान्न निवर्तन्ते। स्कन्धालयं च नोत्सृजन्ति। धातूरगेभ्यश्च न निर्विद्यन्ते। नन्दीरागतश्चारकं च नावबुध्यन्ते। षडायतनशून्यग्रामं च न व्यवलोकयन्ति। अहंकारममकाराभिनिवेशानुशयं च न प्रजहन्ति। मानदृष्टिशल्यं च नोद्धरन्ति। रागद्वेषमोहज्वलनं च न प्रशमयन्ति। अविद्यामोहान्धकारं च 10 न विधमयन्ति। तृष्णार्णवं च नोच्छोषयन्ति। दशबलसार्थवाहं च न पर्येषन्ते। माराशयगहनानुगतश्च संसारसागरे विविधाकुशलवितर्कग्राहाकुले परिप्लवन्ते। अप्रतिशरणास्तथा संवेगमापद्यन्ते, बहूनि दुःखानि प्रत्यनुभवन्ति यदुत जातिजराव्याधिमरणशोकपरिदेवदुःखदौर्मनस्योपायासान्। हन्त अहमेषां सत्त्वानां दुःखार्तानामनाथानामत्राणानामशरणानामलयनानामपरायणानामन्धानामविद्याण्डकोशपटलपर्यवनद्धानां तमोभिभूतानामर्थाय एकोऽद्वितीयो 15 भूत्वा तथारूपं पुण्यज्ञानसंभारोपचयं बिभर्मि, यथारूपेण पुण्यज्ञानसंभारोपचयेन संभृतेन इमे सर्वसत्त्वा अत्यन्तविशुद्धिमनुप्राप्नुयुः, यावद्दशबलबलतामसङ्गज्ञाननिष्ठामनुप्राप्नुयुरिति ॥

स एवं सुविलोकितज्ञानाभिनिर्हृतया बुद्ध्या यत्किंचित् कुशलमूलमारभते, तत्सर्वसत्त्वपरित्राणायारभते। सर्वसत्त्वहिताय सर्वसत्त्वसुखाय सर्वसत्त्वानुकम्पायै सर्वसत्त्वानुपद्रवाय सर्वसत्त्वपरिमोचनाय सर्वसत्त्वानुकर्षाय सर्वसत्त्वप्रसादनाय सर्वसत्त्वविनयाय 20 सर्वसत्त्वपरिनिर्वाणायारभते ॥

स भूयस्या मात्रया अस्यां पञ्चम्यां सुदुर्जयायां बोधिसत्त्वभूमौ स्थितो बोधिसत्त्वः स्मृतिमांश्च भवति, असंप्रमोषधर्मतया मतिमांश्च भवति, सुविनिश्चितज्ञानतया गतिमांश्च भवति, सूत्रार्थगतिसंधायभाषितावबोधतया ह्रीमांश्च भवति, आत्मपरानुरक्षणतया धृतिमांश्च भवति, संवरचारित्रानुत्सर्गतया बुद्धिमांश्च भवति, स्थानास्थानकौशल्यसुविचारित-25 तया ज्ञानानुगतश्च भवति, अपरप्रणेयतया प्रज्ञानुगतश्च भवति, अर्थानर्थसंभेदपदकुशलतया अभिज्ञानिर्हारप्राप्तश्च भवति, भावनाभिनिर्हारकुशलतया उपायकुशलश्च भवति लोकानुवर्तनतया। अतृप्तश्च भवति पुण्यसंभारोपचयतया। अप्रतिप्रस्रब्धवीर्यश्च भवति ज्ञानसंभारपर्येषणतया। अपरिखिन्नाशयश्च भवति महामैत्रीकृपासंभारसंभृततया। अशिथिलपर्येषणाभियुक्तश्च भवति तथागतबलवैशारद्यावेणिकबुद्धधर्मपर्येषणतया। स्वभिनिर्हृतमनसि-30 कारानुगतश्च भवति बुद्धक्षेत्रविठपनालंकाराभिनिर्हृततया। विचित्रकुशलक्रियाभियुक्तश्च भवति लक्षणानुव्यञ्जनसमुदानयनतया। सततसमितं स्वभियुक्तश्च भवति तथागतकायवाक्चित्तालंकारपर्येषणतया। महागौरवोपस्थानशीलश्च भवति सर्वबोधिसत्त्वधर्मभाणक-

R 44 R 45

शुश्रूषणतया । अप्रतिहतचित्तश्च भवति बोधिचित्तमहोपायकौशल्यसंध्युपसंहितलोकप्रचारतया । रात्रिंदिवमन्यचित्तपरिवर्जितश्च भवति सर्वसत्त्वपरिपाचनाभियोगतया ॥

स एवमभियुक्तो दानेनापि सत्त्वान् परिपाचयति, प्रियवद्यतयापि, अर्थक्रिययापि, समानार्थतयापि, रूपकायसंदर्शनेनापि, धर्मदेशनयापि, बोधिसत्त्वचर्याप्रभावनयापि, तथागतमाहात्म्यप्रकाशनतयापि, संसारदोषसंदर्शनेनापि, बुद्धज्ञानानुशंसापरिकीर्तनेनापि, महर्द्धिविकुर्वणाभिनिर्हारणानोपचारक्रियाप्रयोगैरपि सत्त्वान् परिपाचयति । स एवं सत्त्वपरिपाचनाभियुक्तो बुद्धज्ञानानुगतचित्तसंतानोऽप्रत्युदावर्तनीयकुशलमूलप्रयोगो वैशेषिकधर्मपरिमार्गणाभियुक्तः यानीमानि सत्त्वहितानि लोके प्रचरन्ति, तद्यथा—लिपिशास्त्रमुद्रासंख्यागणनानिक्षेपादीनि नानाधातुतन्त्रचिकित्सातन्त्राणि शोषापस्मारभूतग्रहप्रतिषेधकानि विषवेतालप्रयोगप्रतिघातकानि काव्यनाटकाख्यानगान्धर्वेतिहाससंप्रहर्षणानि ग्रामनगरोद्यानन्दीसरस्तडागपुष्करिणीपुष्पफलौषधिवनषण्डाभिनिर्हाराणि सुवर्णरूप्यमणिमुक्तावैडूर्यशङ्खशिलाप्रवालरत्नाकरनिदर्शनानि चन्द्रसूर्यग्रहज्योतिर्नक्षत्रभूमिचालमृगशकुनिस्वप्ननिमित्तानि प्रदेशप्रवेशानि सर्वाङ्गप्रत्यङ्गलक्षणानि चारानुचारप्रयोगनिमित्तानि संवरचारित्रस्थानध्यानाभिज्ञाप्रमाणारूप्यस्थानानि, यानि चान्यान्यपि अविहेठनाविहिंसासंप्रयुक्तानि सर्वसत्त्वहितसुखावहानि, तान्यप्यभिनिर्हरति कारुणिकतया अनुपूर्वबुद्धधर्मप्रतिष्ठापनाय ॥

R 46

तस्य अस्यां सुदुर्जयायां बोधिसत्त्वभूमौ स्थितस्य बोधिसत्त्वस्य[1]....पेयालं....परिणामयति । तांश्च तथागतानर्हतः सम्यक्संबुद्धान् पर्युपासते, तेषां च सकाशाद् गौरवचित्रीकारेण सत्कृत्य धर्मदेशनां शृणोति उद्गृह्णाति धारयति । श्रुत्वा च यथाबलं यथाभजमानं प्रतिपत्त्या संपादयति । भूयस्त्वेन च तेषां तथागतानां शासने प्रव्रजति । प्रव्रजितश्च श्रुतधारी धर्मभाणको भवति । स भूयस्या मात्रया श्रुताचारधारणीप्रतिलब्धो धर्मभाणको भवति अनेकेषां च बुद्धकोटिनियुतशतसहस्राणामन्तिके अनेककल्पकोटिनियुतशतसहस्राण्यसंप्रमोषतया । तस्य अस्यां सुदुर्जयायां बोधिसत्त्वभूमौ स्थितस्य अनेकान् कल्पांस्तानि कुशलमूलान्युत्तप्यन्ते परिशुध्यन्ति प्रभास्वरतराणि च भवन्ति, अनेकानि कल्पशतानि....। तस्य तानि कुशलमूलान्युत्तप्यन्ते परिशुद्ध्यन्ति प्रभास्वरतराणि च भवन्ति । तद्यथापि नाम भवन्तो जिनपुत्रास्तदेव जातरूपं मुसारगल्वसृष्टं भूयस्या मात्रयोत्तप्यते परिशुध्यति प्रभास्वरतरं भवति, एवमेव भवन्तो जिनपुत्रा बोधिसत्त्वस्य अस्यां सुदुर्जयायां बोधिसत्त्वभूमौ स्थितस्य तानि कुशलमूलान्युपायप्रज्ञाविचारितानि भूयस्या मात्रयोत्तप्यन्ते परिशुद्ध्यन्ति, प्रभास्वरतराणि च भवन्ति, ज्ञानप्रयोगगुणाभिनिर्हारादसंहार्यविचारिततमानि च भवन्ति । तद्यथापि नाम भवन्तो जिनपुत्राश्चन्द्रसूर्यग्रहज्योतिर्नक्षत्राणां विमानालोकप्रभावातमण्डलीभिरसंहार्या भवति मारुतासाधारणा च, एवमेव भवन्तो जिनपुत्रा बोधिसत्त्वस्य अस्यां सुदुर्जयायां

[1] See page 12.

बोधिसत्त्वभूमौ स्थितस्य तानि कुशलमूलान्युपायप्रज्ञाज्ञानचित्तविचारणानुगतान्यसंहार्याणि भवन्ति, सर्वश्रावकप्रत्येकबुद्धैर्लौकिकासाधारणानि च भवन्ति। तस्य दशभ्यः पारमिताभ्यो ध्यानपारमिता अतिरिक्ततमा भवति,न च परिशेषासु न समुदागच्छति यथाबलं यथाभजमानम्। इयं भवन्तो जिनपुत्रा बोधिसत्त्वस्य सुदुर्जया नाम पञ्चमी बोधिसत्त्वभूमिः समासनिर्देशतः,

R 47

5 यस्यां प्रतिष्ठितो बोधिसत्त्वो भूयस्त्वेन संतुषितो भवति, देवराजः कृती प्रभुः सत्त्वानां सर्वतीर्थ्यायतनविनिवर्तनाय कुशलः सत्त्वान् सत्येषु प्रतिष्ठापयितुम्। यत्किंचित्[1]........ ॥

सुदुर्जया नाम पञ्चमी भूमिः ॥



[1] See page 14 and change °शतं into °कोटीसहस्रं.

## ६ अभिमुखी नाम षष्ठी भूमिः ।

वज्रगर्भो बोधिसत्त्व आह—योऽयं भवन्तो जिनपुत्रा बोधिसत्त्वः पञ्चम्यां बोधिसत्त्वभूमौ सुपरिपूर्णमार्गः षष्ठीं बोधिसत्त्वभूमिमवतरति । स दशभिर्धर्मसमताभिरवतरति । कतमाभिर्दशभिः ? यदुत सर्वधर्मानिमित्तसमतया च सर्वधर्मालक्षणसमतया च सर्वधर्मानुत्पादसमतया च सर्वधर्माजाततया च सर्वधर्मविविक्तसमतया च सर्वधर्मादिविशुद्धिसमतया च सर्वधर्मनिष्प्रपञ्चसमतया च सर्वधर्मानाव्यूहानिर्व्यूहसमतया च सर्वधर्ममायास्वप्नप्रतिभासप्रतिश्रुत्कोदकचन्द्रप्रतिबिम्बनिर्माणसमतया च सर्वधर्मभावाभावाद्वयसमतया च । आभिर्दशभिर्धर्मसमताभिरवतरति ॥

स एवंस्वभावान् सर्वधर्मान् प्रत्यवक्षेमाणोऽनुसृजन् अनुलोमयन् अविलोमयन् श्रद्दधन् अभियन् प्रतियन् अविकल्पयन् अनुसरन् व्यवलोकयन् प्रतिपद्यमानः षष्ठीमभिमुखीं बोधिसत्त्वभूमिमनुप्राप्नोति तीक्ष्णया आनुलोमिक्या क्षान्त्या । न च तावदनुत्पत्तिकधर्मक्षान्तिमुखमनुप्राप्नोति ॥

स एवंस्वभावान् सर्वधर्माननुगच्छन् भूयस्या मात्रया महाकरुणापूर्वंगमत्वेन महाकरुणाधिपतेयतया महाकरुणापरिपूरणार्थं लोकस्य संभवं च विभवं च व्यवलोकयते । तस्य लोकस्य संभवं च विभवं च व्यवलोकयत एवं भवति—यावत्यो लोकसमुदाचारोपपत्तयः सर्वाः, ता आत्माभिनिवेशतो भवन्ति । आत्माभिनिवेशविगमतो न भवन्ति लोकसमुदाचारोपपत्तय इति । तस्यैवं भवति—तेन खलु पुनरिमे बालबुद्धय आत्माभिनिविष्टा अज्ञानतिमिरावृता भावाभावाभिलाषिणोऽयोनिशोमनसिकारप्रसृता विपथप्रयाता मिथ्यानुचारिणः पुण्यापुण्यानेञ्ज्यानभिसंस्कारानुपचिन्वन्ति । तेषां तैः संस्कारैरवरोपितं चित्तबीजं सास्रवं सोपादानमायत्यां जातिजरामरणपुनर्भवाभिनिर्वृत्तिसंभवोपगतं भवति । कर्मक्षेत्रालयमविद्यान्धकारं तृष्णास्नेहमस्मिमानपरिष्यन्दनतः । दृष्टिकृतजालप्रवृद्ध्या च नामरूपाङ्कुरः प्रादुर्भवति । प्रादुर्भूतो विवर्धते । विवृद्धे नामरूपे पञ्चानामिन्द्रियाणां प्रवृत्तिर्भवति । प्रवृत्तानामिन्द्रियाणामन्योन्य[ सं ]निपाततः स्पर्शः । स्पर्शस्य संनिपाततो वेदना प्रादुर्भवति । वेदनायास्तत उत्तरेऽभिनन्दना भवति । तृष्णाभिनन्दनत उपादानं विवर्धते । उपादाने विवृद्धे भवः संभवति । भवे संभूते स्कन्धपञ्चकमुन्मज्जति । उन्मग्नं स्कन्धपञ्चकं गतिपञ्चकेऽनुपूर्वं म्लायति । म्लानं विगच्छति । म्लानविगमाज्ज्वरपरिदाहः । ज्वरपरिदाहनिदानाः सर्वशोकपरिदेवदुःखदौर्मनस्योपायासाः समुदागच्छन्ति । तेषां न कश्चित्समुदानेता । स्वभावानाभोगाभ्यां च विगच्छन्ति । न चैषां कश्चिद्विगमयिता । एवं बोधिसत्त्वोऽनुलोमाकारं प्रतीत्यसमुत्पादं प्रत्यवेक्षते ॥

तस्यैवं भवति—सत्येष्वनभिज्ञानं परमार्थतोऽविद्या । अविद्याप्रकृतस्य कर्मणो विपाकः संस्काराः । संस्कारसंनिश्रितं प्रथमं चित्तं विज्ञानम् । विज्ञानसहजाश्चत्वार उपादानस्कन्धा

नामरूपम् । नामरूपविवृद्धिः षडायतनम् । इन्द्रियविषयविज्ञानत्रयसमवधानं सास्रवं स्पर्शः । स्पर्शसहजा वेदना । वेदनाध्यवसानं तृष्णा । तृष्णाविवृद्धिरुपादानम् । उपादानप्रसृतं सास्रवं कर्म भवः । कर्मनिष्यन्दो जातिः स्कन्धोन्मज्जनम् । स्कन्धपरिपाको R 49 जरा । जीर्णस्य स्कन्धभेदो मरणम् । म्रियमाणस्य विगच्छतः संमूढस्य साभिष्वङ्गस्य 5 हृदयसंतापः शोकः । शोकसमुत्थिता वाक्प्रलापाः परिदेवः । पञ्चेन्द्रियनिपातो दुःखम् । मनोदृष्टिनिपातो दौर्मनस्यम् । दुःखदौर्मनस्यबहुलत्वसंभूता उपायासाः । एवमयं केवलो दुःखस्कन्धो दुःखवृक्षोऽभिनिर्वर्तते कारकवेदकविरहित इति ॥

तस्यैवं भवति—कारकाभिनिवेशतः क्रियाः प्रज्ञायन्ते । यत्र कारको नास्ति, क्रियापि तत्र परमार्थतो नोपलभ्यते । तस्यैवं भवति—चित्तमात्रमिदं यदिदं त्रैधातुकम् । 10 यान्यपीमानि द्वादश भवाङ्गानि तथागतेन प्रभेदशो व्याख्यातानि, अपि सर्वाण्येव तानि चित्तसमाश्रितानि । तत्कस्य हेतोः? यस्मिन् वस्तुनि हि रागसंयुक्तं चित्तमुत्पद्यते तद्विज्ञानम् । वस्तुसंस्कारेऽस्मिमोहोऽविद्या । अविद्याचित्तसहजं नामरूपम् । नामरूपविवृद्धिः षडायतनम् । षडायतनभागीयः स्पर्शः । स्पर्शसहजा वेदना । वेदयतोऽवितृप्तिस्तृष्णा । तृष्णार्तस्य संग्रहोऽपरित्याग उपादानम् । एषां भवाङ्गानां संभवो भवः । भवोन्मज्जनं 15 जातिः । जातिपरिपाको जरा । जरापगमो मरणमिति ॥

तत्र अविद्या द्विविधकार्यप्रत्युपस्थाना भवति । आलम्बनतः सत्त्वान् संमोहयति, हेतुं च ददाति संस्काराभिनिर्वृत्तये । संस्कारा अपि द्विविधकार्यप्रत्युपस्थाना भवन्ति । अनागतविपाकाभिनिर्वृत्तिं च कुर्वन्ति, हेतुं च ददति विज्ञानाभिनिर्वृत्तये । विज्ञानमपि द्विविधकार्यप्रत्युपस्थानं भवति । भवप्रतिसंधिं च करोति, हेतुं च ददाति नामरूपा- 20 भिनिर्वृत्तये । नामरूपमपि द्विविधकार्यप्रत्युपस्थानं भवति । अन्योन्योपस्तम्भनं च R 50 करोति, हेतुं च ददाति षडायतनाभिनिर्वृत्तये । षडायतनमपि द्विविधकार्यप्रत्युपस्थानं भवति । स्वविषयविभक्तितां चादर्शयति, हेतुं च ददाति स्पर्शाभिनिर्वृत्तये । स्पर्शोऽपि द्विविधकार्यप्रत्युपस्थानो भवति । आलम्बनस्पर्शनं च करोति, हेतुं च ददाति वेदना- भिनिर्वृत्तये । वेदनापि द्विविधकार्यप्रत्युपस्थाना भवति । इष्टानिष्टोभयविमुक्तानुभवनं च 25 करोति, हेतुं च ददाति तृष्णाभिनिर्वृत्तये । तृष्णापि द्विविधकार्यप्रत्युपस्थाना भवति । संरजनीयवस्तुसंरागं च करोति, हेतुं च ददात्युपादानाभिनिर्वृत्तये । उपादानमपि द्विविध- कार्यप्रत्युपस्थानं भवति । संक्लेशबन्धनं च करोति, हेतुं च ददाति भवाभिनिर्वृत्तये । भवोऽपि द्विविधकार्यप्रत्युपस्थानो भवति । अन्यभवगतिप्रत्यधिष्ठानं च करोति, हेतुं च ददाति जात्यभिनिर्वृत्तये । जातिरपि द्विविधकार्यप्रत्युपस्थाना भवति । स्कन्धोन्मजनं च 30 करोति, हेतुं च ददाति जराभिनिर्वृत्तये । जरापि द्विविधकार्यप्रत्युपस्थाना भवति । इन्द्रियपरिणामं च करोति, हेतुं च ददाति मरणसमवधानाभिनिर्वृत्तये । मरणमपि द्विविधकार्यप्रत्युपस्थानं भवति—संस्कारविध्वंसनं च करोति, अपरिज्ञानानुच्छेदं चेति ॥

तत्र अविद्याप्रत्ययाः संस्कारा इत्यविद्याप्रत्ययता संस्काराणामनुच्छेदोऽनुपस्तम्भश्च । संस्कारप्रत्ययं विज्ञानमिति संस्कारप्रत्ययता विज्ञानानामनुच्छेदोऽनुपस्तम्भश्च । पेयालं.... जातिप्रत्ययता जरामरणस्यानुच्छेदोऽनुपस्तम्भश्च । अविद्यानिरोधात्संस्कारनिरोध इत्यविद्याप्रत्ययताभावात्संस्काराणां व्युपशमोऽनुपस्तम्भश्च । पेयालं....जातिप्रत्ययताभावाज्जरामरणस्य व्युपशमोऽनुपस्तम्भश्च ॥ 5

तत्र अविद्या तृष्णोपादानं च क्लेशवर्त्मनोऽव्यवच्छेदः । संस्कारा भवश्च कर्मवर्त्मनोऽव्यवच्छेदः । परिशेषं दुःखवर्त्मनोऽव्यवच्छेदः । प्रविभागतः पूर्वान्तापरान्तनिरोधवर्त्मनो व्यवच्छेदः । एवमेव त्रिवर्त्म निरात्मकमात्मात्मीयरहितं संभवति च असंभवयोगेन, विभवति च अविभवयोगेन स्वभावतो नडकलापसदृशम् ॥

अपि तु खलु पुनर्यदुच्यते—अविद्याप्रत्ययाः संस्कारा इत्येषा पौर्वान्तिक्यपेक्षा । 10 R 51 विज्ञानं यावद्वेदनेत्येषा प्रत्युत्पन्नापेक्षा । तृष्ण यावद्भव इत्येषा अपरान्तिक्यपेक्षा । अत उर्ध्वमस्य प्रवृत्तिरिति । अविद्यानिरोधात्संस्कारनिरोध इत्यपेक्षाव्यवच्छेद एषः ॥

अपि तु खलु पुनस्त्रिदुःखता द्वादश भवाङ्गान्युपादाय । तत्र अविद्या संस्कारा यावत्षडायतनमित्येषा संस्कारदुःखता । स्पर्शो वेदना चैषा दुःखदुःखता । परिशेषाणि भवाङ्गान्येषा परिणामदुःखता । अविद्यानिरोधात्संस्कारनिरोध इति त्रिदुःखताव्यवच्छेद एषः ॥ 15

अविद्याप्रत्ययाः संस्कारा इति हेतुप्रत्ययप्रभवत्वं संस्काराणाम् । एवं परिशेषाणाम् । अविद्यानिरोधात्संस्कारनिरोध इत्यभावः संस्काराणाम् । एवं परिशेषाणाम् ॥

अविद्याप्रत्ययाः संस्कारा इत्युत्पादविनिबन्ध एषः । एवं परिशेषाणाम् । अविद्यानिरोधात्संस्कारनिरोध इति व्ययविनिबन्ध एषः । एवं परिशेषाणाम् ॥

अविद्याप्रत्ययाः संस्कारा इति भावानुलोमपरीक्षा । एवं परिशेषाणाम् । अविद्या- 20 निरोधात्संस्कारनिरोध इति क्षयव्ययानुलोमपरीक्षा । एवं परिशेषाणाम् ॥

स एवं द्वादशाकारं प्रतीत्यसमुत्पादं प्रत्यवेक्षतेऽनुलोमप्रतिलोमं यदुत भवाङ्गानुसंधितश्च एकचित्तसमवसरणतश्च स्वकर्मासंभेदतश्च अविनिर्भागतश्च त्रिवर्त्मानुवर्तनतश्च पूर्वान्तप्रत्युत्पन्नापरान्तावेक्षणतश्च त्रिदुःखतासमुदयतश्च हेतुप्रत्ययप्रभवतश्च उत्पादव्ययविनिबन्धनतश्च अभावाक्षयताप्रत्यवेक्षणतश्च ॥ 25

तस्यैवं द्वादशाकारं प्रतीत्यसमुत्पादं प्रत्यवेक्षमाणस्य निरात्मतो निःसत्त्वतो निर्जीवतो R 52 निष्पुद्गलतः कारकवेदकरहिततोऽस्वामिकतो हेतुप्रत्ययाधीनतः स्वभावशून्यतो विविक्ततोऽस्वभावतश्च प्रकृत्या प्रत्यवेक्षमाणस्य शून्यताविमोक्षमुखमाजातं भवति ॥

तस्यैवं भवाङ्गानां स्वभावनिरोधात्यन्तविमोक्षप्रत्युपस्थानतो न किंचिद्धर्मनिमित्त- 30 मुत्पद्यते । अतोऽस्य आनिमित्तविमोक्षमुखमाजातं भवति ॥

तस्यैवं शून्यतानिमित्तमवतीर्णस्य न कश्चिदभिलाष उत्पद्यते अन्यत्र महाकरुणापूर्वकात्सत्त्वपरिपाचनात्। एवमस्य अप्रणिहितविमोक्षमुखमाजातं भवति॥

य इमानि त्रीणि विमोक्षमुखानि भावयन् आत्मपरसंज्ञापगतः कारकवेदकसंज्ञापगतो भावाभावसंज्ञापगतो भूयस्या मात्रया महाकरुणापुरस्कृतः प्रयुज्यतेऽपरिनिष्पन्नानां बोध्यङ्गानां 5 परिनिष्पत्तये, तस्यैवं भवति—संयोगात्संस्कृतं प्रवर्तते। विसंयोगान्न प्रवर्तते। सामग्र्या संस्कृतं प्रवर्तते। विसामग्र्या न प्रवर्तते। हन्त वयमेवं बहुदोषदुष्टं संस्कृतं विदित्वा अस्य संयोगस्य अस्याः सामग्र्या व्यवच्छेदं करिष्यामः, न चात्यन्तोपशमं सर्वसंस्काराणामविरागयिष्यामः[1] सत्त्वपरिपाचनतायै॥

एवमस्य भवन्तो जिनपुत्राः संस्कारगतं बहुदोषदुष्टं स्वभावरहितमनुत्पन्नानिरुद्धं 10 प्रकृत्या प्रत्यवेक्षमाणस्य महाकरुणाभिनिर्हारतश्च सत्त्वकार्यानुत्सर्गतश्च सङ्गज्ञानाभिमुखो नाम प्रज्ञापारमिताविहारोऽभिमुखीभवत्यवभासयोगेन। स एवं ज्ञानसमन्वागतः प्रज्ञापारमिताविहारावभासितो बोध्यङ्गाहारकांश्च प्रत्ययानुपसंहरति। न च संस्कृतसंवासेन संवसति। स्वभावोपशमं च संस्काराणां प्रत्यवेक्षते। न च तत्रावतिष्ठते बोध्यङ्गापरित्यक्तत्वात्[2]॥

R 53 तस्य अस्यामभिमुख्यां बोधिसत्त्वभूमौ स्थितस्य बोधिसत्त्वस्य अवतारशून्यता च नाम 15 समाधिराजायते। स्वभावशून्यता.... परमार्थशून्यता.... परमशून्यता.... महाशून्यता... संप्रयोगशून्यता....अभिनिर्हारशून्यता यथावदविकल्पशून्यता सापेक्षशून्यता विनिर्भागाविनिर्भागशून्यता नाम समाधिराजायते। तस्यैवंप्रमुखानि दश शून्यतासमाधिमुखशतसहस्राण्यामुखीभवन्ति। एवमानिमित्तसमाधिमुखशतसहस्राणि अप्रणिहितसमाधिमुखशतसहस्राण्यामुखीभवन्ति। तस्य भूयस्या मात्रया अस्यामभिमुख्यां बोधिसत्त्वभूमौ स्थितस्य 20 बोधिसत्त्वस्याभेद्याशयता च परिपूर्यते। नियताशयता....कल्याणाशयता....गम्भीराशयता... अप्रत्युदावर्त्याशयता....अप्रतिप्रस्रब्धाशयता... विमलाशयता... अनन्ताशयता... ज्ञानाभिलाषाशयता...उपायप्रज्ञासंप्रयोगाशयता च परिपूर्यते॥

तस्यैते दश बोधिसत्त्वाशयाः स्वनुगता भवन्ति तथागतबोधौ। अप्रत्युदावर्तनीयवीर्यश्च भवति सर्वपरप्रवादिभिः। समवसृतश्च भवति ज्ञानभूमौ। विनिवृत्तश्च भवति 25 श्रावकप्रत्येकबुद्धभूमिभ्यः। एकान्तिकश्च भवति बुद्धज्ञानाभिमुखतायाम्। असंहार्यश्च भवति सर्वमारक्लेशसमुदाचारैः। सुप्रतिष्ठितश्च भवति बोधिसत्त्वज्ञानालोकतायाम्। सुपरिभावितश्च भवति शून्यतानिमित्ताप्रणिहितधर्मसमुदाचारैः। संप्रयुक्तश्च भवत्युपायप्रज्ञाविचारैः। व्यवकीर्णश्च भवति बोधिपाक्षिकधर्माभिनिर्हारैः। तस्य अस्यामभिमुख्यां बोधिसत्त्वभूमौ स्थितस्य प्रज्ञापारमिताविहारोऽतिरिक्ततर आजातो भवति, तीक्ष्णा चानुलोमिकी 30 तृतीया क्षान्तिरेषां धर्माणां यथावदनुलोमतया न विलोमतया॥

---

१ Mss. अधिगमिष्यामः. २ Mss. °परिपूरित्वात्.

R 54

तस्य अस्यामभिमुख्यां बोधिसत्त्वभूमौ स्थितस्य बोधिसत्त्वस्य यथावत्समापत्तिप्रज्ञाज्ञानालोकतया प्रयुज्यते, प्रतिपत्तितश्चाधारयति। स भूयस्या मात्रया तथागतधर्मकोशप्राप्तो भवति। तस्य अस्यामभिमुख्यां बोधिसत्त्वभूमौ स्थितस्य अनेकान् कल्पांस्तानि कुशलमूलानि भूयस्या मात्रया उत्तप्तप्रभास्वरतराणि भवन्ति। अनेकानि कल्पशतानि ........ । तानि कुशलमूलानि भूयस्या मात्रयोत्तप्तप्रभास्वरतराणि भवन्ति। तद्यथापि नाम भवन्तो 5 जिनपुत्रास्तदेव जातरूपं वैडूर्यपरिसृष्टं भूयस्या मात्रयोत्तप्तप्रभास्वरतरं भवति, एवमेव भवन्तो जिनपुत्रा बोधिसत्त्वस्य अस्यामभिमुख्यां बोधिसत्त्वभूमौ स्थितस्य तानि कुशलमूलान्युपायप्रज्ञाज्ञानविचारितानि भूयस्या मात्रयोत्तप्तप्रभास्वरतराणि भवन्ति, भूयो भूयश्च प्रशमासंहार्यतां गच्छन्ति। तद्यथापि नाम भवन्तो जिनपुत्राश्चन्द्राभा सत्त्वाश्रयांश्च प्रह्लादयति असंहार्या च भवति चतसृभिर्वातमण्डलीभिः, एवमेव भवन्तो जिनपुत्रा बोधिसत्त्वस्य अस्या- 10 मभिमुख्यां बोधिसत्त्वभूमौ स्थितस्य तानि कुशलमूलान्यनेकेषां सत्त्वकोटिनियुतशतसहस्राणां क्लेशज्वालाः प्रशमयन्ति, प्रह्लादयन्ति, असंहार्याणि च भवन्ति चतुर्भिर्मारावचरैः। तस्य दशभ्यः पारमिताभ्यः प्रज्ञापारमिता अतिरिक्ततमा भवति, न च परिशेषा न समुदागच्छति यथाबलं यथाभजमानम्। इयं भवन्तो जिनपुत्रा बोधिसत्त्वस्य अभिमुखी नाम षष्ठी बोधिसत्त्वभूमिः समासनिर्देशतः, यस्यां प्रतिष्ठितो बोधिसत्त्वो भूयस्त्वेन सुनिर्मितो भवति 15 देवराजः कृती प्रभुः सत्त्वानामभिमानप्रतिप्रस्रब्धये कुशलः सत्त्वान्याभिमानिकधर्मेभ्यो विनिवर्तयितुम्। असंहार्यश्च भवति सर्वश्रावकपरिपृच्छायां कुशलः सत्त्वान् प्रतीत्यसमुत्पादेऽवतारयितुम्। यच्च किंचित् ........॥

अभिमुखी नाम षष्ठी भूमिः॥

---

१ See page. 12 २ See page 14 and change °शतं into °कोटीशतसहस्रं.

# ७ दूरंगमा नाम सप्तमी भूमिः ।

R 55

वज्रगर्भ आह—योऽयं भवन्तो जिनपुत्रा बोधिसत्त्वः षष्ठ्यां बोधिसत्त्वभूमौ सुपरिपूर्णबोधिसत्त्वमार्गः सप्तमीं बोधिसत्त्वभूमिमाक्रमति, स दशभिरुपायप्रज्ञाज्ञानाभिनिर्हृतैर्मार्गान्तरारम्भविशेषैराक्रमति । कतमैर्दशभिः ? यदुत शून्यतानिमित्ताप्रणिहितसमाधिसुपरि-
5 भावितमानसश्च भवति, महापुण्यज्ञानसंभारोपचयं च संविभर्ति । नैरात्म्यनिःसत्त्वनिर्जीवनिष्पुद्गलतां च सर्वधर्माणामवतरति, चतुरप्रमाणाभिनिर्हारं च नोत्सृजति । पुण्यधर्मोच्छ्रयपारमिताभिसंस्कारं चाभिसंस्करोति, न च किंचिद्धर्ममभिनिविशते । सर्वत्रैधातुकविवेकप्राप्तश्च भवति, त्रैधातुकविठपनालंकाराभिनिर्हारं चाभिनिर्हरति । अत्यन्तशान्तोपशान्तश्च सर्वक्लेशज्वालापगमाद्भवति, सर्वसत्त्वरागद्वेषक्लेशज्वालाप्रशमाभिनिर्हारं चाभि-
10 निर्हरति । मायामरीचिस्वप्नप्रतिभासप्रतिश्रुत्कोदकचन्द्रप्रतिबिम्बनिर्माणभावाभावस्वभावाद्वयानुगतश्च भवति, कर्मक्रियाविभक्त्यप्रमाणाशयतां चाभिनिर्हरति । आकाशसमक्षेत्रपथसुभावितमनाश्च भवति, बुद्धक्षेत्रविठपनालंकाराभिनिर्हारं चाभिनिर्हरति । प्रकृतिधर्मकायतां च सर्वबुद्धानामवतरति, रूपकायलक्षणानुव्यञ्जनविठपनालंकाराभिनिर्हारं चाभिनिर्हरति । अनभिलाप्यरुतघोषापगतं च प्रकृतिशान्तं तथागतघोषमधिमुच्यते, सर्वस्वराङ्ग-
15 विभक्तिविशुद्ध्यलंकाराभिनिर्हारं चाभिनिर्हरति । एकक्षणत्र्यध्वानुबोधं च बुद्धानां भगवतामवतरति, नानालक्षणकल्पसंख्याविभावनां चानुप्रविशति सत्त्वाशयविभावनाय । एभिर्भवन्तो जिनपुत्रा दशभिरुपायप्रज्ञाज्ञानाभिनिर्हृतिभिर्मार्गान्तरारम्भविशेषैर्बोधिसत्त्वः षष्ठ्या बोधिसत्त्वभूमेः सप्तमीं बोधिसत्त्वभूमिमाक्रान्त इत्युच्यते ॥

R 56

स सप्तम्यां बोधिसत्त्वभूमौ स्थितो बोधिसत्त्वोऽप्रमाणसत्त्वधातुमवतरति । अप्रमाणं
20 च बुद्धानां भगवतां सत्त्वपरिपाचनविनयकर्मावतरति । अप्रमाणं लोकधातुमवतरति । अप्रमाणं च बुद्धानां भगवतां क्षेत्रपरिशुद्धिमवतरति । अप्रमाणं च धर्मनानात्वमवतरति । अप्रमाणं च बुद्धानां भगवतां ज्ञानाभिसंबोधिमवतरति । अप्रमाणं च कल्पसंख्याप्रवेशमवतरति । अप्रमाणं च बुद्धानां भगवतां त्र्यध्वानुबोधमवतरति । अप्रमाणं च सत्त्वानामधिमुक्तिनानात्वविशेषमवतरति । अप्रमाणं च बुद्धानां भगवतां रूपकायनानात्वदर्शनमव-
25 तरति । अप्रमाणं च सत्त्वानामाशयेन्द्रियनानात्वमवतरति । अप्रमाणं च बुद्धानां भगवतां घोषोदाहारसत्त्वसंतोषणमवतरति । अप्रमाणं सत्त्वानां चित्तचरितनानात्वमवतरति । अप्रमाणं च बुद्धानां भगवतां ज्ञानप्रसरानुगममवतरति । अप्रमाणं श्रावकयाननिर्याणाधिमुक्तिनानात्वमवतरति । अप्रमाणं च बुद्धानां भगवतां मार्गदेशनावतारमवतरति । अप्रमाणं प्रत्येकबुद्धयानसमुदागमनिष्पत्तिमवतरति । अप्रमाणं च बुद्धानां भगवतां ज्ञानमुखप्रवेश-
30 निर्देशमवतरति । बोधिसत्त्वानां बोधिसत्त्वचर्याप्रयोगमवतरति । अप्रमाणं च बुद्धानां भगवतां महायानसमुदयावतारनिर्देशनामवतरति ॥

तस्यैवं भवति—एवमप्रमाणः खलु पुनस्तथागतानामर्हतां सम्यक्संबुद्धानां विषयो यस्य न सुकरा संख्या कर्तुं कल्पकोटिशतसहस्रैर्यावदेतावद्भिरपि कल्पकोटिनियुतशतसहस्रैः। सर्व....विषयोऽस्माभिः समुपस्थापयितव्योऽनाभोगतोऽकल्पाविकल्पतश्च परिपूरयितव्य इति। स एवं सुप्रत्यवेक्षितज्ञानाभिज्ञः सततसमितमभियुक्तोपायप्रज्ञापरिभावितेषु मार्गान्तरारम्भविशेषेषु सुप्रतिष्ठितो भवत्यविचाल्ययोगेन॥

स एकक्षणमपि मार्गाभिनिर्हारान्न व्युत्तिष्ठते। स गच्छन्नेव ज्ञानाभिनिर्हारयुक्तो 5 भवति। तिष्ठन्नपि निषण्णोऽपि शयानोऽपि स्वप्नान्तरगतोऽप्यपगतनीवरणः सर्वेर्यापथे स्थितोऽविरहितो भवति एभिरेवंरूपैः संज्ञामनसिकारैः। तस्य सर्वचित्तोत्पादे दशानां बोधिसत्त्वपारमितानां समुदागमपरिपूरिः समुदागच्छति। तत्कस्माद्धेतोः? तथा हि स बोधिसत्त्वः सर्वांश्चित्तोत्पादानुत्पन्नोत्पन्नान् महाकरुणापूर्वकान् बुद्धधर्मसमुदागमाय R 57 तथागतज्ञानाय परिणामयति। तत्र यः कुशलमूलस्य सत्त्वेभ्य उत्सर्गो बुद्धज्ञानं पर्येषमाणस्य, 10 इयमस्य दानपारमिता। यः प्रशमः सर्वक्लेशपरिदाहानाम्, इयमस्य शीलपारमिता। या कृपामैत्रीपूर्वंगमा सर्वसत्त्वेषु क्षान्तिः, इयमस्य क्षान्तिपारमिता। य उत्तरोत्तरकुशलधर्मातृप्ततयारम्भः पराक्रमः, इयमस्य वीर्यपारमिता। या विप्रतिसार्यविसृतमार्गता सर्वज्ञज्ञानाभिमुखता, इयमस्य ध्यानपारमिता। या सर्वधर्माणां प्रकृत्यनुत्पादाभिमुखी क्षान्तिः, इयमस्य प्रज्ञापारमिता। योऽप्रमाणज्ञानाभिनिर्हारः, इयमस्योपायकौशलपारमिता। य उत्तरो- 15 त्तरप्रणिधानज्ञानस्फरणाभिनिर्हारः, इयमस्य प्रणिधानपारमिता। यां सर्वपरप्रवादिमारसंघैर्मार्गानाच्छेद्यता, इयमस्य बलपारमिता। यद्यथावत्सर्वधर्मज्ञाननितीरणम्, इयमस्य ज्ञानपारमिता। एवमस्य भवन्तो जिनपुत्रा बोधिसत्त्वस्य दूरंगमायां बोधिसत्त्वभूमौ स्थितस्य इमा दश पारमिताः क्षणे क्षणे परिपूर्यन्ते। एवं चत्वारि संग्रहवस्तूनि परिपूर्यन्ते, चत्वारि च अधिष्ठानानि, सप्तत्रिंशद् बोधिपक्ष्याश्च धर्माः, त्रीणि च विमोक्षमुखानि, समासतः 20 सर्वबोध्यङ्गिका धर्माः क्षणे क्षणे परिपूर्यन्ते॥

एवमुक्ते विमुक्तिचन्द्रो बोधिसत्त्वो वज्रगर्भं बोधिसत्त्वमेतदवोचत्—किं पुनर्भो जिनपुत्रा अस्यामेव सप्तम्यां बोधिसत्त्वभूमौ स्थितस्य बोधिसत्त्वस्य सर्वबोध्यङ्गिका[1] धर्माः क्षणे क्षणे परिपूर्यन्ते, आहोस्वित्सर्वासु दशसु बोधिसत्त्वभूमिषु? वज्रगर्भ आह—सर्वासु भो जिनपुत्रा दशसु बोधिसत्त्वभूमिषु बोधिसत्त्वस्य सर्वबोध्यङ्गानि क्षणे क्षणे परिपूर्यन्ते, तदतिरेकेण पुनरस्या- 25 मेव सप्तम्यां बोधिसत्त्वभूमौ। तत्कस्य हेतोः? इयं भो जिनपुत्रा बोधिसत्त्वभूमिः प्रायोगिकचर्यापरिपूरणी च ज्ञानाभिज्ञानचर्याक्रमणी च। अपि तु खलु पुनर्भो जिनपुत्राः प्रथमायां बोधिसत्त्वभूमौ सर्वप्रणिधानाध्यालम्बनेन बोधिसत्त्वस्य सर्वबोध्यङ्गानि क्षणे क्षणे परिपूर्यन्ते। द्वितीयायां चित्तमलापनयनेन। तृतीयायां प्रणिधानविवर्धनतया धर्मावभासप्रतिलम्भेन च। चतुर्थ्यां मार्गावतारेण। पञ्चम्यां लोकत्रयानुवृत्त्या। षष्ठ्यां गम्भीरधर्ममुखप्रवेशेन। अस्यां 30 R 58 तु सप्तम्यां बोधिसत्त्वभूमौ सर्वबुद्धधर्मसमुत्थापनतया क्षणे क्षणे सर्वबोध्यङ्गानि परिपूर्यन्ते।

[1] London and Cal. Mss. सर्वबोध्यङ्गानि.

तत्कस्य हेतोः? यानि बोधिसत्त्वेन प्रथमां बोधिसत्त्वभूमिमुपादाय यावत्सप्तमी बोधिसत्त्व-
भूमिरित्यभिनिर्हृतानि ज्ञानाभिनिर्हारप्रयोगाङ्गानि, इमान्यष्टमी बोधिसत्त्वभूमिमारभ्य याव-
दत्यन्तपर्यवसानमित्यनाभोगेन परिनिष्पद्यन्ते। तद्यथापि नाम भो जिनपुत्रा द्वयोर्लोकधात्वोः
संक्लिष्टविशुद्धाशयश्च लोकधातोरेकान्तपरिशुद्धाशयश्च लोकधातोर्लोकान्तरिका दुरतिक्रमा न
5 शक्या यथातथातिक्रमितुमन्यत्र महाभिज्ञाबलाधानात्, एवमेव भो जिनपुत्र व्यामिश्रपरिशुद्धा
बोधिसत्त्वचर्यान्तरिका दुरतिक्रमा न शक्या यथातथातिक्रमितुमन्यत्र महाप्रणिधानोपाय-
प्रज्ञाभिज्ञाबलाधानात्। विमुक्तिचन्द्र आह—किं पुनर्भो जिनपुत्र सप्तसु बोधिसत्त्वभूमिषु
क्लेशचर्यासंक्लिष्टा बोधिसत्त्वचर्या प्रत्येतव्या? वज्रगर्भ आह—प्रथमामेव भो जिनपुत्र
बोधिसत्त्वभूमिमुपादाय सर्वाबोधिसत्त्वचर्यापगतक्लेशकल्माषा बोधिपरिणामनाधिपत्येन प्रत्ये-
10 तव्या। यथाभागिमार्गसमतया, (न च) तावत्सप्तसु बोधिसत्त्वभूमिषु समतिक्रान्ता
क्लेशचर्येत्यवाचनीया। तद्यथापि नाम भो जिनपुत्र राजा चक्रवर्ती दिव्यं हस्तिरत्नमभि-
रूढश्चतुरो द्वीपानाक्रमति, मनुष्यदुःखदारिद्र्यसंक्लेशदोषांश्च प्रजानाति, न च तैर्दोषैर्लिप्यते।
न च तावत्समतिक्रान्तो मनुष्यभावं भवति। यदा पुनर्मनुष्याश्रयं हित्वा ब्रह्मलोकोपपन्नो
भवति ब्राह्म्यविमानमभिरूढः, सहस्रलोकधातुमल्पकृच्छ्रेण पश्यत्यनुविचरति, ब्रह्मप्रतिभासं
15 चादर्शयति, न च मनुष्य इति प्रभाव्यते, एवमेव भोः प्रथमां भूमिमुपादाय बोधिसत्त्वः
पारमितायानाभिरूढः सर्वजगदनुविचरन् संक्लेशदोषान् प्रजानाति, न च तैर्दोषैर्लिप्यते
सम्यग्मार्गाभिरूढत्वात्। न च तावत्समतिक्रान्तः सर्वजगत्संक्लेशदोषान् वक्तव्यः। सप्तसु
R 59 भूमिषु सर्वप्रायोगिकचर्यां विहाय सप्तम्या भूमेरष्टमीं बोधिसत्त्वभूमिमवक्रान्तो भवति, तदा
परिशुद्धं बोधिसत्त्वयानमभिरूढः सर्वजगदनुविचरन् सर्वजगत्संक्लेशदोषान् प्रजानाति, न
20 च तैर्दोषैर्लिप्यते समतिक्रान्तत्वाद् लोकक्रियाभ्यः। अस्यां पुनर्भो जिनपुत्र सप्तम्यां
बोधिसत्त्वभूमौ स्थितो बोधिसत्त्वो भूयस्त्वेन रागादिप्रमुखं सर्वक्लेशगणं समतिक्रान्तो भवति।
सोऽस्यां दूरंगमायां बोधिसत्त्वभूमौ चरन् बोधिसत्त्वोऽसंक्लेशानिष्क्लेश इति वक्तव्यः।
तत्कस्मात्? असमुदाचारात्सर्वक्लेशानां न संक्लेश इति वक्तव्यः। तथागतज्ञानाभिलाषा-
दपरिपूर्णाभिप्रायत्वाच्च न निष्क्लेश इति वक्तव्यः॥

25 सोऽस्यां सप्तम्यां बोधिसत्त्वभूमौ स्थितो बोधिसत्त्वोऽध्याशयपरिशुद्धेन कायकर्मणा
समन्वागतो भवति। अध्याशयपरिशुद्धेन वाक्कर्मणा अध्याशयपरिशुद्धेन मनस्कर्मणा समन्वा-
गतो भवति। ये चेमे दशाकुशलाः कर्मपथास्तथागतविवर्णिताः, तान् सर्वेण सर्वं समति-
क्रान्तो भवति। ये चेमे दश कुशलाः कर्मपथाः सम्यक्संबुद्धानुभाविताः, तान् सततसमित-
मनुवर्तते। यानि लौकिकानि शिल्पस्थानकर्मस्थानानि यान्यभिनिर्हृतानि पञ्चम्यां बोधि-
30 सत्त्वभूमौ, तान्यस्य सर्वाण्यनाभोगत एवं प्रवर्तन्ते। स आचार्यः संमतो भवति त्रिसाहस्र-
महासाहस्रलोकधातौ, स्थापयित्वा तथागतानर्हतः सम्यक्संबुद्धान्, अष्टमीं भूमिमुपादाय च
बोधिसत्त्वान्। नास्य कश्चित्समो भवत्याशयेन वा प्रयोगेण वा। यानि चेमानि ध्यानानि

समाधयः समापत्तयोऽभिज्ञा विमोक्षाश्च, तान्यस्य सर्वेण सर्वमामुखीभवन्ति भावनाभिनिर्हाराकारेण। न च तावद्विपाकतः परिनिष्पन्नानि भवन्ति तद्यथापि नाम अष्टम्यां बोधिसत्त्वभूमौ स्थितस्य बोधिसत्त्वस्य। अस्यां सप्तम्यां बोधिसत्त्वभूमौ स्थितस्य बोधिसत्त्वस्य सर्वचित्तोत्पादेषु प्रज्ञोपायभावनाबलं परिपूर्यते। भूयस्या मात्रया सर्वबोध्यङ्गपरिपूरिं प्रतिलभते ॥ 5

सोऽस्यां सप्तम्यां बोधिसत्त्वभूमौ स्थितः सन् सुविचितविचयं च नाम बोधिसत्त्वसमाधिं समापद्यते। सुविचिन्तितार्थं च नाम....। विशेषमतिं च नाम....। प्रभेदार्थकोशं च....। सर्वार्थविचयं च....। सुप्रतिष्ठितदृढमूलं च....। ज्ञानाभिज्ञामुखं च....। R 60 धर्मधातु(परि)कर्मं च....। तथागतानुशंसं च....। विचित्रार्थकोशसंसारनिर्वाणमुखं च बोधिसत्त्वसमाधिं समापद्यते। स एवंप्रमुखानि महाभिज्ञाज्ञानमुखानि परिपूर्णानि 10 दश समाधिशतसहस्राणि भूमिपरिशोधिकानि समापद्यते ॥

स एषां समाधीनामुपायप्रज्ञासुपरिशोधितानां प्रतिलम्भान्महाकरुणाबलेन चातिक्रान्तो भवति श्रावकप्रत्येकबुद्धभूमिम्, अभिमुखश्च भवति प्रज्ञाज्ञानविचारणाभूमेः ॥

तस्य अस्यां सप्तम्यां बोधिसत्त्वभूमौ स्थितस्य बोधिसत्त्वस्य अप्रमाणं कायकर्म निमित्तापगतं प्रवर्तते। अप्रमाणं वाक्कर्म....मनस्कर्म निमित्तापगतं प्रवर्तते सुविशोधित- 15 मनुत्पत्तिकधर्मक्षान्त्यवभासितम्। विमुक्तिचन्द्र आह—ननु भो जिनपुत्र, प्रथमायामेव बोधिसत्त्वभूमौ स्थितस्य बोधिसत्त्वस्य अप्रमाणं कायवाङ्मनस्कर्म सर्वश्रावकप्रत्येकबुद्धचर्यां समतिक्रान्तं भवति? वज्रगर्भ आह—भवति भो जिनपुत्र। तत्पुनर्बुद्धधर्माध्यालम्बनमाहात्म्येन, न पुनः स्वबुद्धिविचारेण। अस्यां तु पुनः सप्तम्यां बोधिसत्त्वभूमौ स्वबुद्धिगोचरविचारप्रतिलम्भादसंहार्यं श्रावकप्रत्येकबुद्धैर्भवति। तद्यथापि नाम भवन्तो जिनपुत्रा 20 राजकुलप्रसूतो राजपुत्रो राजलक्षणसमन्वागतो जातमात्र एव सर्वामात्यगणमभिभवति राजाधिपत्येन, न पुनः स्वबुद्धिविचारेण। यदा पुनः स संवृद्धो भवति तदा स्वबुद्धिबलाधानतः सर्वामात्यक्रियासमतिक्रान्तो भवति, एवमेव भो जिनपुत्रा बोधिसत्त्वः सहचित्तोत्पादेन सर्वश्रावकप्रत्येकबुद्धानभिभवत्यध्याशयमाहात्म्येन, न पुनः स्वबुद्धिविचारेण। अस्यां तु सप्तम्यां बोधिसत्त्वभूमौ स्थितो बोधिसत्त्वः स्वविषयज्ञानविशेषमाहात्म्यावस्थितत्वात्सर्व- 25 श्रावकप्रत्येकबुद्धक्रियामतिक्रान्तो भवति ॥

स खलु पुनर्भो बोधिसत्त्वोऽस्यां सप्तम्यां बोधिसत्त्वभूमौ स्थितो गम्भीरस्य विविक्तस्याप्रचारस्य कायवाङ्मनस्कर्मणो लाभी भवति। न चोत्तरं विशेषपरिमार्गणाभियोगमवसृजति। [ येन परिमार्गणाभियोगेन निरोधप्राप्तश्च भवति, न च निरोधं साक्षात्करोति ॥ ] R 61

विमुक्तिचन्द्र आह—कतमां भूमिमुपादाय बोधिसत्त्वो निरोधं समापद्यते? वज्रगर्भ 30 आह—षष्ठीं भो जिनपुत्र बोधिसत्त्वभूमिमुपादाय बोधिसत्त्वो निरोधं समापद्यते। अस्यां

पुनः सप्तम्यां बोधिसत्त्वभूमौ प्रतिष्ठितो बोधिसत्त्वश्चित्तक्षणे चित्तक्षणे निरोधं समापद्यते च व्युत्तिष्ठते च। न च निरोधः साक्षात्कृत इति वक्तव्यः। तेन सोऽचिन्त्येन कायवाङ्मनस्कर्मणा समन्वागत इत्युच्यते[१]। आश्चर्यं भो यत्र हि नाम बोधिसत्त्वो भूतकोटिविहारेण च विहरति, न च निरोधं साक्षात्करोति। तद्यथापि नाम भो जिनपुत्र पुरुषः कुशलो 5 महासागरे वारिलक्षणाभिज्ञः पण्डितो व्यक्तो मेधावी तत्रोपगतया मीमांसया समन्वागतो महासागरे महायानपात्राभिरूढो वहनकुशलश्च भवति, वारिकुशलश्च भवति, न च महासमुद्रे वारिदोषैर्लिप्यते, एवमेव भो जिनपुत्र अस्यां सप्तम्यां बोधिसत्त्वभूमौ प्रतिष्ठितो बोधिसत्त्वः सर्वज्ञज्ञानमहासागरावतीर्णः पारमितामहायानपात्राभिरूढो भूतकोटिविहारेण च विहरति, न च निरोधं साक्षात्करोति, (न च संस्कृतात्यन्तव्युपशमवितर्कदोषैर्लिप्यते)॥

10 स एवं ज्ञानबलाधानप्राप्तः समाधिज्ञानबलभावनाभिनिर्हृतया बुद्ध्या महतोपायप्रज्ञाबलाधानेन संसारमुखं चादर्शयति। निर्वाणसततशयश्च भवति। महापरिवारपरिवृतश्च भवति। सततसमितं च चित्तविवेकप्रतिलब्धो भवति। त्रैधातुकोपपत्तिं च प्रणिधानवशेनाभिनिर्हरति सत्त्वपरिपाचनार्थम्। न च लोकदोषैर्लिप्यते। शान्तप्रशान्तोपशान्तश्च भवति। उपायेन च ज्वलति। ज्वलंश्च न दहते। संवर्तते च बुद्धज्ञानेन। विवर्तते च श्रावक- R 62 15 प्रत्येकबुद्धभूमिभ्याम्। बुद्धज्ञानविषयकोशप्राप्तश्च भवति। मारविषयगतश्च दृश्यते। चतुर्मारपथसमतिक्रान्तश्च भवति। मारविषयगोचरं चादर्शयति। सर्वतीर्थ्यायतनोपगतश्च दृश्यते। बुद्धतीर्थ्यायतनानुत्सृष्टाशयश्च भवति। सर्वलोकक्रियानुगतश्च दृश्यते। लोकोत्तरधर्मगतिसमवसरणश्च भवति। सर्वदेवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगमनुष्यामनुष्यशक्रब्रह्मलोकपालातिरेकव्यूहालंकारविठपनाप्राप्तश्च भवति। सर्वबुद्धधर्मरतिमनसिकारं च न विजहाति॥

20 तस्यैवं ज्ञानसमन्वागतस्य अस्यां सप्तम्यां दूरंगमायां बोधिसत्त्वभूमौ स्थितस्य बोधिसत्त्वस्य बहवो बुद्धा आभासमागच्छन्ति[२]........। तांश्च तथागतानर्हतः सम्यक्संबुद्धान् पर्युपासते। तेषां च सकाशाद्गौरवचित्रीकारेण सत्कृत्य धर्मदेशनां शृणोति, उद्गृह्णाति धारयति। श्रुत्वा च यथावत्समापत्तिप्रज्ञाज्ञानालोकेन प्रयुज्यते। प्रतिपत्तितश्चाधारयति। शासनसंधारकश्च भवति तेषां बुद्धानां महात्मनाम्। असंहार्यश्च सर्वश्रावकप्रत्येकबुद्धाभिसमयपरिपृच्छासु। तस्य 25 भूयस्या मात्रया सत्त्वानुग्रहाय गम्भीरधर्मक्षान्तिर्विशुद्ध्यति। तस्य........अनेकान् कल्पांस्तानि कुशलमूलान्युत्तप्यन्ते, परिशुद्ध्यन्ति, कर्मण्यानि च भवन्ति, पर्यवदानं चागच्छन्ति। अनेकानि कल्पशतानि........अनेकानि कल्पकोटिनियुतशतसहस्राणि तानि कुशलमूलान्युत्तप्यन्ते, परिशुद्ध्यन्ति, कर्मण्यानि च भवन्ति, पर्यवदानं चागच्छन्ति। तद्यथापि नाम भो जिनपुत्राः तदेव जातरूपं सर्वरत्नप्रत्युप्तं भूयस्या मात्रयोत्तप्ततरं भवति, 30 प्रभास्वरतरं भवति, असंहार्यतरं च भवत्यन्याभ्यो भूषणविकृतिभ्यः, एवमेव भो जिनपुत्राः....तानि कुशलमूलान्युपायप्रज्ञाज्ञानाभिनिर्हृतानि भूयस्या मात्रयोत्तप्ततराणि

१ Paris Ms. adds विमुक्तिचन्द्रो बोधिसत्त्व आह. २ See page 12.

भवन्ति प्रभास्वरतराणि, पर्यवदाततराणि असंहार्यतराणि च भवन्ति सर्वश्रावकप्रत्येक- R 63
बुद्धैः । तद्यथापि नाम भो जिनपुत्राः सूर्याभा असंहार्या भवन्ति सर्वज्योतिर्गण-
चन्द्राभाभिश्चतुर्षु महाद्वीपेषु, सर्वस्नेहगतानि भूयस्त्वेन परिशोषयन्ति, सर्वशस्यानि परि-
पाचयन्ति, एवमेव भो जिनपुत्रा....तानि कुशलमूलान्यसंहार्याणि भवन्ति सर्वश्रावक-
प्रत्येकबुद्धैः, चतुर्विपर्यासगतानि च सर्वक्लेशस्नेहगतानि भूयस्त्वेन परिशोषयन्ति । क्लेशा- 5
विलानि च सर्वसंतानानि परिपाचयन्ति । तस्य दशभ्यः पारमिताभ्य उपायकौशल्य-
पारमिता अतिरिक्ततमा भवति, न च परिशेषा न समुदागच्छति यथाबलं यथाभजमानम् ।
इयं भो जिनपुत्रा बोधिसत्त्वस्य दूरंगमा नाम सप्तमी बोधिसत्त्वभूमिः समासनिर्देशतः, यस्यां
प्रतिष्ठितो बोधिसत्त्वो भूयस्त्वेन वशवर्ती भवति देवराजः कृती प्रभुः सत्त्वानामभिसमय-
ज्ञानोपसंहारेष्वपर्यन्तः सर्वश्रावकप्रत्येकबुद्धपरिपृच्छासु कुशलः सत्त्वान्नियाममवक्रामयि- 10
तुम् । यच्च किंचित्[१].... ॥

दूरंगमा नाम सप्तमी भूमिः ॥

——:o:——

१ See page 14 and change °शतं into °कोटिनियुतशतसहस्रं.

## ८ अचला नाम अष्टमी भूमिः ।

वज्रगर्भो बोधिसत्त्व आह—योऽयं भवन्तो जिनपुत्रा बोधिसत्त्वः सप्तसु बोधिसत्त्वभूमिषु सुकृतविचयः प्रज्ञोपायाभ्यां सुपरिशोधितमार्गः सुसंभृतसंभारः सुपरिबद्धमहाप्रणिधानः अधिष्ठिततथागताधिष्ठानः स्वकुशलमूलबलाधानप्राप्तः तथागतबलवैशारद्यावेणिक-
5 बुद्धधर्मानुगतसंज्ञामनसिकारः सुपरिशोधिताध्याशयसंकल्पः पुण्यज्ञानबलाभ्युद्गतः महाकरुणाकृपाभ्यां सर्वसत्त्वानुत्सृष्टप्रयोगः अप्रमाणज्ञानपथानुगतः, स सर्वधर्माणामाद्यनुत्पन्नतां च यथाभूतमवतरति । अजाततां च अलक्षणतां च असंभूततां च अविनाशितां च
R 64 अनिष्ठितता च अप्रवृत्तितां च अनभिनिवृत्तितां च अभावस्वभावतां च आदिमध्यपर्यवसानसमतां च तथताविकल्पसर्वज्ञज्ञानप्रवेशतां च सर्वधर्माणां यथाभूतमवतरति । स
10 सर्वशश्चित्तमनोविज्ञानविकल्पसंज्ञापगतोऽनवगृहीताकाशसमोऽभ्यवकाशप्रकृतितोऽवतीर्णोऽनुत्पत्तिकधर्मक्षान्तिप्राप्त इत्युच्यते ॥

तत्र भवन्तो जिनपुत्रा एवं क्षान्तिसमन्वागतो बोधिसत्त्वः सहप्रतिलम्भादचलाया बोधिसत्त्वभूमेर्गम्भीरं बोधिसत्त्वविहारमनुप्राप्तो भवति दुराज्ञातमसंभिन्नं सर्वनिमित्तापगतं सर्वसंज्ञाग्रहव्यावृत्तमप्रमाणमसंहार्यं सर्वश्रावकप्रत्येकबुद्धैः सर्वविवेकाभिमुखीभूतम् । तद्यथापि
15 नाम भवन्तो जिनपुत्रा भिक्षुर्ऋद्धिमांश्चेतोवशिपारमिताप्राप्तोऽनुपूर्वेण नवमं निरोधं समापन्नः सर्वेञ्जितमन्यनास्पन्दितविकल्पापगतो भवति, एवमेव भवन्तो जिनपुत्रा बोधिसत्त्वोऽस्या अष्टम्या अचलाया बोधिसत्त्वभूमेः सहप्रतिलम्भात्सर्वाभोगविगतोऽनाभोगधर्मताप्राप्तः कायवाक्चित्तौत्सुक्यापगतः सर्वेञ्जितमन्यनास्पन्दितविकल्पापगतो विपाकधर्मतावस्थितो भवति । तद्यथापि नाम भो जिनपुत्राः पुरुषः सुप्तः स्वप्नान्तरगतो महौघप्राप्तमात्मानं संजानीते ।
20 स तत्र महद्व्यायामौत्सुक्यमारभेतोत्तरणाय । स तेनैव महता व्यायामौत्सुक्येन विबुध्येत । समनन्तरविबुद्धश्च व्यायामौत्सुक्यभयापगतो भवेत् । एवमेव भो जिनपुत्रा बोधिसत्त्वश्चतुर्महौघप्राप्तं सत्त्वकायं संजानान उत्तरणाभिप्रायः सर्वज्ञज्ञानाभिसंबोधाय महद्व्यायामौत्सुक्यमारभते । स महावीर्यारम्भप्राप्तः समनन्तरमनुप्राप्त इमामचलां बोधिसत्त्वभूमिं सर्वाभोगविगतो भवति । तस्य सर्वेण सर्वं द्वयसमुदाचारो वा निमित्तसमुदाचारो वा नाभासीभवति ।
25 तद्यथापि नाम भो जिनपुत्रा ब्रह्मलोकोपपत्तिस्थितः कामावचरान् क्लेशान् न समुदाचरति, एवमेव भो जिनपुत्रा बोधिसत्त्वोऽचलायां बोधिसत्त्वभूमौ स्थितः सर्वचित्तमनोविज्ञानसमुदा-
R 65 चारान्न समुदाचरति । सर्वबुद्धसमुदाचारमपि... बोधिसमुदाचारमपि.... बोधिसत्त्वसमुदाचारमपि....प्रत्येकबुद्धसमुदाचारमपि....श्रावकसमुदाचारमपि....निर्वाणसमुदाचारमपि... अर्हत्समुदाचारमपि.... अनागामिसमुदाचारमपिं.... सकृदागामिसमुदाचारमपि.... स्रोत-
30 आपन्नसमुदाचारमपि न समुदाचरति । कः पुनर्वादो लौकिकान् समुदाचारान् समुदाचरिष्यतीति ॥

तस्य खलु भो जिनपुत्र बोधिसत्त्वस्य एवमिमामचलां बोधिसत्त्वभूमिमनुगतस्य पूर्वप्रणिधानबलाधानस्थितस्य बुद्धा भगवन्तस्तस्मिन् धर्ममुखस्रोतसि तथागतज्ञानोपसंहारं कुर्वन्ति । एवं चैनं ब्रुवन्ति—साधु साधु कुलपुत्र । एषा परमार्थक्षान्तिर्बुद्धधर्मानुगमाय । अपि तु खलु पुनः कुलपुत्र या अस्माकं दशबलचतुर्वैशारद्यबुद्धधर्मसमृद्धिः, सा तव नास्ति । तस्या बुद्धधर्मसमृद्धेः पर्येषणाय अभियोगं कुरु, वीर्यमारभस्व । एतदेव क्षान्तिमुखं 5 मोन्मोक्षीः । अपि तु खलु पुनः कुलपुत्र किंचापि त्वयैवं शान्तविमोक्षविहारोऽनुप्राप्तः, इमान् पुनरशान्तानप्रशान्तान् बालपृथग्जनान् नानाक्लेशसमुदाचारप्राप्तान् विविधवितर्कोपहतमानसान् समन्वाहर, अपेक्षस्व । अपि तु खलु पुनः कुलपुत्र पूर्वप्रणिधानमनुस्मर सत्त्वार्थसंप्रापणं ज्ञानमुखाचिन्त्यतां च । अपि तु खलु पुनः कुलपुत्र एषा सर्वधर्माणां धर्मता । उत्पादाद्वा तथागतानामनुत्पादाद्वा स्थितैवैषा धर्मता धर्मधातुस्थितिः यदिदं 10 सर्वधर्मशून्यता सर्वधर्मानुपलब्धिः । नैतया तथागता एव केवलं प्रभाव्यन्ते, सर्वश्रावकप्रत्येकबुद्धा अपि ह्येतामविकल्पधर्मतामनुप्राप्नुवन्ति । अपि तु खलु पुनः कुलपुत्र प्रेक्षस्व R 66 तावत् त्वमस्माकं कायाप्रमाणतां च ज्ञानाप्रमाणतां च बुद्धक्षेत्राप्रमाणतां च ज्ञानाभिनिर्हाराप्रमाणतां च प्रभामण्डलाप्रमाणतां च स्वराङ्गविशुद्ध्यप्रमाणतां च । तथैव त्वमप्यभिनिर्हारमुत्पादय । अपि तु खलु पुनः कुलपुत्र एकस्त्वेष आलोको योऽयं सर्वधर्मनिर्विकल्पा- 15 लोकः । ईदृशास्तु कुलपुत्र धर्मालोकास्तथागतानामपर्यन्तगता अपर्यन्तकृता अपर्यन्तबद्धाः, येषां संख्या नास्ति, गणना प्रमाणमुपनिषदौपम्यं नास्ति, तेषामधिगमाय अभिनिर्हारमुत्पादय । अपि तु खलु पुनः कुलपुत्र प्रेक्षस्व तावद्दशसु दिक्षु अप्रमाणक्षेत्रतां च अप्रमाणसत्त्वतां च अप्रमाणधर्मविभक्तितां च । तत्सर्वमनुगणय । यथावत्तया अभिनिर्हारमुत्पादय । इति हि भो जिनपुत्र ते बुद्धा भगवन्त एवंभूम्यनुगतस्य बोधिसत्त्वस्य एवं- 20 प्रमुखान्यप्रमेयाण्यसंख्येयानि ज्ञानाभिनिर्हारमुखान्युपसंहरन्ति, यैर्ज्ञानाभिनिर्हारमुखैर्बोधिसत्त्वोऽप्रमाणज्ञानविभक्तितोऽभिनिर्हारकर्माभिनिष्पादयति ॥

आरोचयामि ते भो जिनपुत्र, प्रतिवेदयामि । ते चेद्बुद्धा भगवन्तस्तं बोधिसत्त्वमेवं सर्वज्ञज्ञानाभिनिर्हारमुखेषु नावतारयेयुः, तदेवास्य परिनिर्वाणं भवेत्सर्वसत्त्वकार्यप्रतिप्रस्रब्धिश्च । तेन खलु पुनर्बुद्धा भगवन्तस्तस्य बोधिसत्त्वस्य तावदप्रमाणं ज्ञानाभिनिर्हारकर्मोपसंहरन्ति, 25 यस्यैकक्षणाभिनिर्हृतस्य ज्ञानाभिनिर्हारकर्मणः स पूर्वकः प्रथमचित्तोत्पादमुपादाय यावत्सप्तमीं भूमिप्रतिष्ठासुपगत आरम्भः शततमीमपि कलां नोपैति, सहस्रतमीमपि, शतसहस्रतमीमपि.... पेयालं....कोटीनियुतशतसहस्रतमीमपि कलां नोपैति, संख्यामपि, गणनामपि, उपमामपि, उपनिसामपि, यावदौपम्यमपि न क्षमते । तत्कस्य हेतोः ? तथा हि भो जिनपुत्र पूर्वमेककाया- R 67 भिनिर्हारतया चर्याभिनिर्हारोऽभूत् । इमां पुनर्भूमिं समारूढस्य बोधिसत्त्वस्य अप्रमाणकाय- 30 विभक्तितो बोधिसत्त्वचर्याबलं समुदागच्छति । अप्रमाणघोषाभिनिर्हारतः अप्रमाणज्ञानाभिनिर्हारतः अप्रमाणोपपत्त्यभिनिर्हारतः अप्रमाणक्षेत्रपरिशोधनतः अप्रमाणसत्त्वपरिपाचनतः

अप्रमाणबुद्धपूजोपस्थानतः अप्रमाणधर्मकायानुबोधतः अप्रमाणाभिज्ञाबलाधानाभिनिर्हारतः अप्रमाणपर्षन्मण्डलविभक्त्यभिनिर्हारतश्च अप्रमाणानुगतेन कायवाङ्मनस्कर्माभिनिर्हारेण सर्वबोधिसत्त्वचर्याबलं समुदागच्छत्यविचाल्ययोगेन। तद्यथापि नाम भो जिनपुत्र महासमुद्रगामी पोतोऽप्राप्तो महासमुद्रं साभोगवाहनो भवति। स एव समनन्तरमनुप्राप्तो
5 महासमुद्रमनाभोगवाहनो वातमण्डलीप्रणीतो यदेकदिवसेन महासमुद्रे क्रमते, तत्सर्वसाभोगवाहनतया न शक्यं वर्षशतेनापि तावदप्रमेयमनुप्राप्तुम्। एवमेव भो जिनपुत्र बोधिसत्त्वः सुसंभृतमहाकुशलमूलसंभारो महायानसमुदागमाभिरूढो महाबोधिसत्त्वचर्यासागरमनुप्राप्तो यदेकमुहूर्तेन ज्ञानानाभोगतया सर्वज्ञज्ञानेनाक्रमति, तन्न शक्यं पूर्वकेण साभोगकर्मणा कल्पशतसहस्रेणापि तावदप्रमेयमनुप्राप्तुम्॥

10 तत्र भो जिनपुत्र बोधिसत्त्वोऽष्टमीं बोधिसत्त्वभूमिमनुप्राप्तो महत्या उपायकौशल्यज्ञानाभिनिर्हारानाभोगप्रसृतया बोधिसत्त्वबुद्ध्या सर्वज्ञज्ञानं विचारयन् लोकधातुसंभवं च विचारयति, लोकधातुविभवं च विचारयति। स यथा च लोकः संवर्तते, तं च प्रजानाति। यथा च लोको विवर्तते, ....। येन च कर्मोपचयेन लोकः संवर्तते, ....। येन च कर्मक्षयेण लोको विवर्तते, ....। यावत्कालं च लोकः संवर्तते, ....। यावत्कालं च लोको
15 विवर्तते,....। यावत्कालं च लोकः संवृत्तस्तिष्ठति,....। यावत्कालं च लोको विवृत्तस्तिष्ठति, तं च प्रजानाति सर्वत्र चानवशेषतः। स पृथिवीधातुपरीत्ततां च प्रजानाति महद्गततां च... अप्रमाणतां च.... विभक्तितां च प्रजानाति। अब्धातु....। तेजोधातु....। वायुधातु....। स परमाणुरजःसूक्ष्मतां च प्रजानाति, महद्गततां च अप्रमाणतां च विभक्तितां च प्रजानाति। R 68 अप्रमाणपरमाणुरजोविभक्तिकौशल्यं च प्रजानाति। अस्यां च लोकधातौ यावन्ति पृथिवी-
20 धातोः परमाणुरजांसि तानि प्रजानाति। यावन्ति अब्धातोः ....। तेजोधातोः ....। वायुधातोः ....। यावन्त्यो रत्नविभक्तयो यावन्ति च रत्नपरमाणुरजांसि तानि प्रजानाति। सत्त्वकाय ....। क्षेत्रकाय ....। स सत्त्वानां कायौदारिकतां च कायसूक्ष्मतां च कायविभक्तितां च प्रजानाति। यावन्ति परमाणुरजांसि संभूतानि नैरयिककायाश्रयतस्तानि प्रजानाति। तिर्यग्योनिकायाश्रयतः ....।.... यमलोककायाश्रयतः ....।.... असुरलोक-
25 कायाश्रयतः ....। देवलोककायाश्रयतः ....। मनुष्यलोककायाश्रयतः ....। स एवं परमाणुरजःप्रभेदज्ञानावतीर्णः कामधातुसंवर्तं च प्रजानाति। रूपधातुविवर्तं ....। आरूप्यधातुविवर्तं ....। कामधातुविवर्तं च प्रजानाति। रूपधातुपरीत्ततां .... आरूप्यधातुपरीत्ततां ...। कामधातुपरीत्ततां च महद्गततां च अप्रमाणतां च विभक्तितां च प्रजानाति। रूपधात्वारूप्यधातुपरीत्ततां ....। त्रैधातुकविचारज्ञानानुगमे
30 ष्वभिनिर्हृतज्ञानालोकः सत्त्वकायप्रभेदज्ञानकुशलः क्षेत्रकायविभागज्ञानकुशलश्च सत्त्वोपपत्त्यायतनाभिनिर्हारे बुद्धिं चारयति। स यादृशी सत्त्वानामुपपत्तिश्च कायसमुदागमश्च, तादृशमेव स्वकायमधितिष्ठति सत्त्वपरिपाचनाय। स एकामपि त्रिसाहस्रमहासाहस्रां लोकधातुं

स्फरित्वा सत्त्वानां स्वकायं विभक्त्यधिमुक्तिषु तथत्वायोपपत्तयेऽभिनिर्हरति प्रतिभासज्ञानानुगमनतया ( यथा सत्त्वाः परिपाकं गच्छन्त्यनुत्तरसम्यक्संबोधिविमुक्तये ) । एवं द्वे वा तिस्रो वा चतस्रो वा पञ्च वा दश वा विंशतिर्वा त्रिंशद्वा चत्वारिंशद्वा पञ्चाशद्वा शतं वा यावदनभिलाप्या अपि त्रिसाहस्रमहासाहस्रा लोकधातूः स्फरित्वा सत्त्वानां स्वकायं...पेयालं.... प्रतिभासज्ञानानुगमनतया । स एवंज्ञानसमन्वागतोऽस्यां भूमौ सुप्रतिष्ठित एकबुद्धक्षेत्राच्च न चलति, अनभिलाप्येषु बुद्धक्षेत्रेषु तथागतपर्षन्मण्डलेषु च प्रतिभासप्राप्तो भवति ॥ 5

यादृशी सत्त्वानां कायविभक्तिश्च वर्णलिङ्गसंस्थानारोहपरिणाहाधिमुक्त्यध्याशयश्च तेषु बुद्धक्षेत्रेषु तेषु च पर्षन्मण्डलेषु तत्र तत्र तथा तथा स्वकायमादर्शयति । स श्रमणपर्षन्मण्डलेषु श्रमणवर्णरूपमादर्शयति । ब्राह्मणपर्षन्मण्डलेषु ब्राह्मणवर्णरूपमादर्शयति । क्षत्रिय.... । वैश्य.... । शूद्र.... । गृहपति.... । चातुर्महाराजिक.... । त्रायस्त्रिंश.... । 10 R 69 एवं याम.... । तुषित.... । निर्माणरति.... । परनिर्मितवशवर्ति.... । मार.... । ब्रह्म.... । यावदकनिष्ठ.... । श्रावकवैनेयिकानां सत्त्वानां श्रावककायवर्णरूपमादर्शयति । प्रत्येकबुद्धवैनेयिकानां सत्त्वानां प्रत्येकबुद्धकायवर्णरूपमादर्शयति । बोधिसत्त्व.... । तथागत.... । इति हि भो जिनपुत्र यावन्तोऽनभिलाप्येषु बुद्धक्षेत्रेषु सत्त्वानामुपपत्त्यायतनाधिमुक्तिप्रसरास्तेषु तथत्वाय स्वकायविभक्तिमादर्शयति ॥ 15

स सर्वकायविकल्पापगतः कायसमताप्राप्तः ( तच्चास्य कायसंदर्शनमक्षूणमवन्ध्यं च सत्त्वपरिपाकविनयाय ) स सत्त्वकायं च प्रजानाति । क्षेत्रकायं च ... । कर्मविपाककायं च... । श्रावककायं च.... । प्रत्येकबुद्धकायं च.... । बोधिसत्त्वकायं च... । तथागतकायं च... । ज्ञानकायं च... । धर्मकायं च.... । आकाशकायं च प्रजानाति । स सत्त्वानां चित्ताशयाभिनिर्हारमाज्ञाय यथाकालपरिपाकविनयानतिक्रमादाकाङ्क्षन् सत्त्वकायं स्वकायमधितिष्ठति । एवं क्षेत्रकायं कर्मविपाककायं....आत्मकायमधितिष्ठति । स सत्त्वानां चित्ताशयाभिनिर्हारमाज्ञाय यं यमेव कायं यस्मिन् यस्मिन् काये आकाङ्क्षति, तं तमेव कायं तस्मिन् तस्मिन् काये ( स्वकायं ) अधितिष्ठति । स सत्त्वकायानां कर्मकायतां च प्रजानाति । विपाककायतां च... । क्लेशकायतां च.... । रूपकायतां च... । आरूप्यकायतां च प्रजानाति । क्षेत्रकायानां परीत्ततां च प्रजानाति, महद्गततां च अप्रमाणतां च संक्लिष्टतां च विशुद्धतां च व्यत्यस्ततां च अधोमूर्धतां च समतलतां च समवसरणतां च दिग्जालविभागतां च प्रजानाति । कर्मविपाककायानां विभक्तिसंकेतं प्रजानाति । एवं श्रावककायानां प्रत्येकबुद्धकायानां बोधिसत्त्वकायानां विभक्तिसंकेतं प्रजानाति । तथागतकायानामभिसंबोधिकायतां च प्रजानाति । प्रणिधानकायतां च.... । निर्माणकायतां च । अधिष्ठानकायतां च । रूपलक्षणानुव्यञ्जनविचित्रालंकारकायतां च । प्रभाकायतां च । मनोमयकायतां च । पुण्यकायतां च । ज्ञानकायतां च । धर्मकायतां च प्रजानाति । ज्ञानकायानां सुविचारिततां च प्रजानाति । यथावन्निस्तीरणतां च फलप्रयोगसंगृहीततां

(Line numbers 20, 25, 30 in margin.)

च लौकिकलोकोत्तरविभागतां च त्रियाणव्यवस्थानतां च साधारणासाधारणतां च
R 70 नैर्याणिकानैर्याणिकतां च शैक्षाशैक्षतां च प्रजानाति। धर्मकायानां समतां च प्रजानाति।
अविकोपनतां च अवस्थानसंकेतसंवृत्तिव्यवस्थानतां च सत्त्वासत्त्वधर्मव्यवस्थानतां च
बुद्धधर्मार्यसंघव्यवस्थानतां च प्रजानाति। आकाशकायानामप्रमाणतां च सर्वत्रानुगततां
5 च अशरीरतां च अवितथानन्ततां च रूपकायाभिव्यक्तितां च प्रजानाति॥

स एवं कायज्ञानाभिनिर्हारप्राप्तो वशवर्ती भवति सर्वसत्त्वेषु। आयुर्वशितां च प्रतिलभतेऽनभिलाप्यानभिलाप्यकल्पायुःप्रमाणाधिष्ठानतया। चेतोवशितां च प्रतिलभतेऽप्रमाणासंख्येयसमाधिनिध्यप्तिज्ञानप्रवेशतया। परिष्कारवशितां च सर्वलोकधात्वनेकव्यूहालंकारप्रतिमण्डिताधिष्ठानसंदर्शनतया। कर्मवशितां च यथाकालं कर्मविपाकाधिष्ठान-
10 संदर्शनतया। उपपत्तिवशितां च सर्वलोकधातूपपत्तिसंदर्शनतया अधिमुक्तिसंदर्शनतया सर्वलोकधातुबुद्धप्रतिपूर्णसंदर्शनतया प्रणिधानसंदर्शनतया यथेष्टबुद्धक्षेत्रकालाभिसंबोधिसंदर्शनतया ऋद्धिसंदर्शनतया सर्वबुद्धक्षेत्रऋद्धिविकुर्वणसंदर्शनतया धर्मसंदर्शनतया अनन्तमध्यधर्ममुखालोकसंदर्शनतया ज्ञानसंदर्शनतया तथागतबलवैशारद्यावेणिकबुद्धधर्मलक्षणानुव्यञ्जनाभिसंबोधिसंदर्शनतया॥

15 स आसां दशानां बोधिसत्त्ववशितानां सहप्रतिलम्भेन अचिन्त्यज्ञानी च भवति अतुल्यज्ञानी च अप्रमेयज्ञानी च विपुलज्ञानी च असंहार्यज्ञानी च भवति। तस्यैवंभूम्यनुगतस्य एवंज्ञानसमन्वागतस्य अत्यन्तानवद्यः कायकर्मसमुदाचारः प्रवर्तते, अत्यन्तानवद्यश्च वाक्....। अत्यन्तानवद्यश्च मनःसमुदाचारः प्रवर्तते। ज्ञानपूर्वंगमो ज्ञानानुपरिवर्ती प्रज्ञापारमिताधिपतेयो महाकरुणापूर्वक उपायकौशल्यसुविभक्तः प्रणिधानस्वभिनिर्हृतस्तथागताधिष्ठानस्वधि-
20 ष्ठितोऽप्रतिप्रस्रब्धसत्त्वार्थप्रयोगोऽपर्यन्तलोकधातुविभक्तिगतः। समासतो भो जिनपुत्र बोधिसत्त्वस्य इमामचलां बोधिसत्त्वभूमिमनुप्राप्तस्य सर्वबुद्धधर्मसमुदानयनाय कायवाङ्मनस्कर्मसमुदाचारः प्रवर्तते। स एवमिमामचलां बोधिसत्त्वभूमिमनुप्राप्तः सुप्रतिष्ठिताशयबलश्च
R 71 भवति सर्वक्लेशसमुदाचारापगतत्वात्। सुप्रतिष्ठिताध्याशयबलश्च भवति मार्गाविप्रवासितत्वात्। महाकरुणाबलसुप्रतिष्ठितश्च भवति सत्त्वार्थानुत्सर्गत्वात्। महामैत्री-
25 बल....सर्वजगत्परित्राणत्वात्। धारणीबल....असंप्रमोषधर्मत्वात्। प्रतिभानबल....सर्वबुद्धधर्मप्रविचयविभागकुशलत्वात्। अभिज्ञाबल....अपर्यन्तलोकधातुचर्याविभागकुशलत्वात्। प्रणिधानबल....सर्वबोधिसत्त्वक्रियानुत्सर्गत्वात्। पारमिताबल....सर्वबुद्धधर्मसमुदानयनत्वात्। तथागताधिष्ठानबल....सर्वाकारसर्वज्ञज्ञानाभिमुखत्वात्। स एवंबलाधानप्राप्तः सर्वक्रियाश्च संदर्शयति, सर्वक्रियासु च अनवद्यो भवत्यनुपलिप्तश्च॥

30 इयं भो जिनपुत्र बोधिसत्त्वस्य अष्टमी ज्ञानभूमिरचलेत्युच्यतेऽसंहार्यत्वात्। अविवर्त्यभूमिरित्युच्यते ज्ञानाविवर्त्यत्वात्। दुरासदभूमिरित्युच्यते सर्वजगद्दुर्ज्ञानत्वात्। कुमारभूमि-

रित्युच्यते अनवद्यत्वात्। जन्मभूमिरित्युच्यते यथाभिप्रायवशवर्तित्वात्। परिनिष्पन्नभूमिरित्युच्यते अपुनःकार्यत्वात्। परिनिष्ठितभूमिरित्युच्यते सुकृतज्ञानविचयत्वात्। निर्माणभूमिरित्युच्यते स्वभिनिर्हृतप्रणिधानत्वात्। अधिष्ठानभूमिरित्युच्यते पराविकोपनत्वात्। अनाभोगभूमिरित्युच्यते पूर्वान्ताभिनिर्हृतत्वात्॥

एवं ज्ञानस्वभिनिर्हृतः खलु पुनर्भो जिनपुत्र बोधिसत्त्वो बुद्धगोत्रानुगतो बुद्धगुण- 5 प्रभावभासितस्तथागतेर्यापथचर्याचारित्रानुगतो बुद्धविषयाभिमुखः सततसमितं स्वधिष्ठिततथागताधिष्ठानश्च भवति शक्रब्रह्मलोकपालप्रत्युद्गतश्च वज्रपाणिसततानुबद्धश्च समाधिबलानुत्सृष्टश्च च अप्रमाणकायविभक्त्यभिनिर्हृतश्च सर्वकायचर्याबलोपगतश्च महाभिज्ञाविपाकपरिनिष्पन्नश्च अनन्तसमाधिवशवर्ती च अप्रमाणव्याकरणप्रत्येषकश्च यथापरिपक्वजगदभिसंबोधिनिदर्शकश्च भवति। स एवं ज्ञानभूम्यनुगतो महायानमण्डलानुप्रविष्टः सुविचारितमहा- 10 ज्ञानाभिज्ञः सततसमितं प्रमुक्तप्रज्ञालोकरश्मिरसङ्गधर्मधातुपथावतीर्णो लोकधातुपथविभक्तिकोविदः सर्वाकारगुणसंदर्शकः स्वचित्तोत्पादवशवर्ती पूर्वान्तापरान्तसुविचितज्ञानः सर्वमारपथावर्तनविवर्तनज्ञानानुगतः सर्वतथागतविषयगोचरानुप्रविष्टोऽपर्यन्तलोकधातुप्रसरेषु बोधिसत्त्वचर्यां चरत्यप्रत्युदावर्त्ययोगेन। तत उच्यते बोधिसत्त्वोऽचलां बोधिसत्त्वभूमिमनुप्राप्त इति॥ 15

R 72

तत्र भो जिनपुत्र अचलां बोधिसत्त्वभूमिमनुप्राप्तो बोधिसत्त्वः सततसमितमपर्यन्ततथागतदर्शनाविरहितो भवति समाधिबलस्वभिनिर्हृतत्वात्। औदारिकं बुद्धदर्शनपूजोपस्थानं नोत्सृजति। स एकैकस्मिन् कल्पे एकैकस्मिन् लोकधातुप्रसरे अनेकान् बुद्धान्, अनेकानि बुद्धशतानि....पेयालं....अनेकानि बुद्धकोटीनयुतशतसहस्राणि सत्करोति गुरुकरोति मानयति पूजयति सर्वाकारपूजाभिनिर्हारं चोपसंहरति। तांश्च तथागतान् पर्युपास्ते, लोकधातुविभक्ति- 20 पूर्वकं च धर्मालोकोपसंहारं प्रतीच्छति। स भूयस्या मात्रया तथागतधर्मकोशप्राप्तोऽसंहार्यो भवति लोकधातुपरिपृच्छानिर्देशेषु। तानि चास्य कुशलमूलान्यनेकान् कल्पानुत्तप्यन्ते....। तद्यथापि नाम भो जिनपुत्र तदेव जातरूपं सुपरिनिष्ठितं कुशलेन कर्मारेण सुपरिकर्मकृतं जम्बूद्वीपस्वामिनः कण्ठे शिरसि वा आबद्धमसंहार्यं भवति सर्वजम्बूद्वीपकानां सत्त्वानामाभरणविकृतैः, एवमेव भो जिनपुत्र अस्यामचलायां बोधिसत्त्वभूमौ स्थितस्य बोधिसत्त्वस्य तानि 25 कुशलमूलान्यसंहार्याणि भवन्ति सर्वश्रावकप्रत्येकबुद्धैर्यावत्सप्तमीभूमिस्थितैश्च बोधिसत्त्वैः। इमां च भूमिमनुगतस्य बोधिसत्त्वस्य महती प्रज्ञाज्ञानप्रभा सत्त्वानां क्लेशतमांसि प्रशमयति सुविभक्तज्ञानमुखाभिनिर्हारतया। तद्यथापि नाम भो जिनपुत्र साहस्रिको महाब्रह्मा साहस्र-

---

१ Mss. निर्वाण°.　२ See page 13.

लोकधातुं मैत्र्या स्फरित्वा प्रभयावभासयति, एवमेव भो जिनपुत्र बोधिसत्त्वोऽस्यामचलायां बोधिसत्त्वभूमौ स्थितो यावद्दशबुद्धक्षेत्रशतसहस्रपरमाणुरजःसमान् लोकधातून् महता मैत्र्यवभासेन स्फरित्वा सत्त्वानां क्लेशपरिदाहाननुपूर्वेण प्रशमयति, आश्रयांश्च प्रह्लादयति। तस्य दशभ्यः पारमिताभ्यः प्रणिधानपारमिता अतिरिक्ततमा भवति, न च 5 परिशेषासु न समुदागच्छति यथाबलं यथाभजमानम्। इयं भवन्तो जिनपुत्रा बोधिसत्त्वस्य अचला नाम अष्टमी बोधिसत्त्वभूमिः समासनिर्देशतः। विस्तरशः पुनरपर्यन्तकल्प- R 73 निर्देशनिष्ठातोऽनुगन्तव्या। यस्यां प्रतिष्ठितो बोधिसत्त्वो भूयस्त्वेन महाब्रह्मा भवति साहस्राधिपतिः। अभिभूरनभिभूतोऽन्वर्थदर्शी वशिप्राप्तः कृती प्रभुः सत्त्वानां सर्वश्रावकप्रत्येकबुद्धबोधिसत्त्वपारमितोपदेशोपसंहारेषु असंहार्यो लोकधातुविभक्तिपरिपृच्छानिर्देशेषु। 10 यच्च किंचिद्[1]... ॥

अचला नाम अष्टमी भूमिः ॥



[1] See page 14 and change °शतं into °दशत्रिसाहस्रमहासाहस्ररजःपरमाणुसमं.

# ९ साधुमती नाम नवमी भूमिः ।

वज्रगर्भो बोधिसत्त्व आह—योऽयं भवन्तो जिनपुत्रा बोधिसत्त्व एवमप्रमाणज्ञेय- R 73
विचारितया बुद्ध्या भूयश्चोत्तरान् शान्तान् विमोक्षानध्यवस्यन् अध्यालम्बमानः भूयश्चोत्तरं
तथागतज्ञानं सुसमाप्तं विचारयन् तथागतगुह्यानुप्रवेशं चावतरन् अचिन्त्यज्ञानमाहात्म्यं च
प्रविचिन्वन् धारणीसमाधिप्रविचयं च परिशोधयन् अभिज्ञावैपुल्यं चाभिनिर्हरन् लोकधातु- 5
विभक्तिं चानुगच्छन् तथागतबलवैशारद्यावेणिकबुद्धधर्मासंहार्यतां च परिकर्मयन् तथागत-
धर्मचक्रप्रवर्तनवृषभतां चानुक्रममाणः महाकरुणाधिष्ठानप्रतिलम्भं चानुत्सृजन् नवमीं
बोधिसत्त्वभूमिमाक्रमति । सोऽस्यां साधुमत्यां बोधिसत्त्वभूमौ स्थितः कुशलाकुशलाव्याकृत-
धर्माभिसंस्कारं च यथाभूतं प्रजानाति । सास्रवानास्रवधर्माभिसंस्कारं च....। लौकिक-
लोकोत्तरधर्माभिसंस्कारं च.... । चिन्त्याचिन्त्यधर्माभिसंस्कारं च.... । नियतानियत- 10
धर्माभिसंस्कारं च....। श्रावकप्रत्येकबुद्धधर्माभिसंस्कारं च....। बोधिसत्त्वचर्याधर्माभिसंस्कारं
च...। तथागतभूमिधर्माभिसंस्कारं च....। संस्कृतधर्माभिसंस्कारं च....। असंस्कृतधर्माभि-
संस्कारं च यथाभूतं प्रजानाति ॥

स एवंज्ञानानुगतया बुद्ध्या सत्त्वचित्तगहनोपचारं च यथाभूतं प्रजानाति ।
क्लेशगहनोपचारं च....। कर्मगहनोपचारं च....। इन्द्रियगहनोपचारं च....। अधिमुक्तिगहनो- 15
पचारं च....। धातुगहनोपचारं च...।आशयानुशयगहनोपचारं च...। उपपत्तिगहनोपचारं
च... । वासनानुसंधिगहनोपचारं च.... । त्रिराशिव्यवस्थानगहनोपचारं च यथाभूतं
प्रजानाति । स सत्त्वानां चित्तवैमात्रतां च यथाभूतं प्रजानाति । चित्तविचित्रतां च R 74
चित्तक्षणलघुपरिवर्तभङ्गभङ्गतां च चित्तशरीरतां च चित्तानन्त्यसर्वतःप्रभूततां च चित्त-
प्रभास्वरतां च चित्तसंक्लेशनिःक्लेशतां च चित्तबन्धविमोक्षतां च चित्तमायाविठपनतां 20
च चित्तयथागतिप्रत्युपस्थानतां च यावदनेकानि चित्तनानात्वसहस्राणि यथाभूतं
प्रजानाति । स क्लेशानां दूरानुगततां च यथाभूतं प्रजानाति । प्रयोगानन्ततां च.... ।
सहजाविनिर्भागतां च....। अनुशयपर्युत्थानैकार्थतां च....। चित्तसंप्रयोगासंप्रयोगतां च....।
उपपत्तिसंधियथागतिप्रत्युपस्थानतां च....। त्रैधातुकविभक्तितां च....। तृष्णाविद्यादृष्टिशल्य-
मानमहासावद्यतां च....। त्रिविधकर्मणि दानानुपच्छेदतां च....। समासतो यावच्चतुरशीति- 25
क्लेशचरितनानात्वसहस्रानुप्रवेशतां च यथाभूतं प्रजानाति । स कर्मणां कुशलाकुशला-
व्याकृततां च....। विज्ञप्त्यविज्ञप्तितां च....। चित्तसहजाविनिर्भागतां च...। स्वरसक्षणक्षीण-
भङ्गोपचयाविप्रणाशफलानुसंधितां च....। विपाकाविपाकतां च...। कृष्णशुक्लाकृष्णशुक्लानेक-
देशकर्मसमादानवैमात्रतां च...। कर्मक्षेत्राप्रमाणतां च...। आर्यलौकिकप्रविभक्तितां च....।
लोकोत्तरधर्मव्यवस्थानतां च...। (सोपादानानुपादानतां च...। संस्कृतासंस्कृततां च ।) दृष्ट- 30
धर्मोपपद्यापरपर्यायवेदनीयतां च...। यानायाननियतानियततां च...। समासतो यावच्चतुरशीति-

कर्मनानात्वसहस्रप्रविभक्तिविचयकौशल्यं च यथाभूतं प्रजानाति। स इन्द्रियाणां मृदुमध्याधिमात्रतां च....। पूर्वान्तापरान्तसंभेदासंभेदतां च....। उदारमध्यनिकृष्टतां च....।
R 75 क्लेशसहजाविनिर्भागतां च....। यानायाननियतानियततां च....। यथापरिपक्वापरिपक्ववैनेयिकतां च....। इन्द्रियजालानुपरिवर्तनलघुभङ्गनिमित्तग्रहणतां च....। इन्द्रियाधिपत्यानवमर्दनीयतां
5 च....। विवर्त्याविवर्त्येन्द्रियप्रविभागतां च....। दूरानुगतसहजाविनिर्भागनानात्वविमात्रतां च, समासतो यावदनेकानीन्द्रियनानात्वसहस्राणि प्रजानाति। सोऽधिमुक्तीनां मृदुमध्याधिमात्रतां च.... यावदनेकान्यधिमुक्तिनानात्वसहस्राणि प्रजानाति। स धातूनां....। स आशयानां....। सोऽनुशयानामाशयसहजचित्तसहजतां च....। चित्तसंप्रयोगतां च....। विप्रयोगविभागदूरानुगततां च....। अनादिकालानुद्धटिततां च....। सर्वध्यानविमोक्षसमाधिसमापत्त्यभिज्ञाप्रसह्य-
10 तां च। त्रैधातुकसंधिसुनिबद्धतां च। अनादिकालचित्तनिबन्धसमुदाचारतां च। आयतनद्वारसमुदयविज्ञप्तितां च। प्रतिपक्षालाभाद्रव्यभूततां च। भूम्यायतनसमवधानासमवधानतां च। अनन्यार्यमार्गसमुद्धटनतां च प्रजानाति। स उपपत्तिनानात्वतां च। यथाकर्मोपपत्तितां च। निरयतिर्यग्योनिप्रेतासुरमनुष्यदेवव्यवस्थानतां च। रूपारूप्योपपत्तितां च। संज्ञासंज्ञोपपत्तितां च। कर्मक्षेत्रतृष्णास्नेहाविद्यान्धकारविज्ञानबीजपुनर्भवप्ररोहणतां च।
15 नामरूपसहजाविनिर्भागतां च। भवसंमोहतृष्णाभिलाषसंधितां च। भोक्तुकामभवितुकामसत्त्वरत्यनवराग्रतां च। त्रैधातुकावग्रहणसंज्ञानिष्कर्षणतां च प्रजानाति। स वासनानामुपचारानुपचारतां च....। यथागतिसंबन्धवासनावासिततां च। यथासत्त्वचर्याचरणवासिततां च। यथाकर्मक्लेशाभ्यासवासिततां च। कुशलाकुशलाव्याकृतधर्माभ्यासवासिततां च। पुनर्भवगमनाधिवासिततां च....। अनुपूर्वाधिवासिततां च। दूरानुगतानुपच्छेदक्लेशोपकर्षण-
20 विकारानुद्धरणवासिततां च। द्रव्यभूताद्रव्यभूतवासिततां च। श्रावकप्रत्येकबुद्धबोधिसत्त्व-
R 76 तथागतदर्शनश्रवणसंवासवासिततां च प्रजानाति। स सत्त्वराशीनां सम्यक्त्वनियततां च प्रजानाति मिथ्यात्वनियततां च। उभयत्वानियततां च....। सम्यग्दृष्टिसम्यग्नियततां च मिथ्यादृष्टिमिथ्या....नियततां च। तदुभयविगमादनियततां च पञ्चानन्तर्यान्यतममिथ्यादृष्टिनियततां च....। पञ्चेन्द्रियसम्यग्नियततां च....। अष्टमिथ्यात्वमिथ्यानियततां च....।
25 सम्यक्त्वसम्यग्नियततां च....। अपुनःकारितितां च....। मात्सर्येर्ष्याघृणोपचाराविनिवृत्त्या मिथ्यानियततां च....। आर्यानुत्तरमार्गभावनोपसंहारसम्यक्त्वनियततां च....। तदुभयविगमादनियतराश्युपदेशतां च प्रजानाति। इति हि भो जिनपुत्र एवंज्ञानानुगतो बोधिसत्त्वः साधुमत्यां बोधिसत्त्वभूमौ प्रतिष्ठित इत्युच्यते॥

सोऽस्यां साधुमत्यां बोधिसत्त्वभूमौ स्थित एवं चर्याविमात्रतां सत्त्वानामाज्ञाय तथैव
30 मोक्षोपसंहारमुपसंहरति। स सत्त्वपरिपाकं प्रजानाति। सत्त्वविनयं च....। श्रावकयानदेशनां च। प्रत्येकबुद्धयानदेशनां च। बोधिसत्त्वयानदेशनां च। तथागतभूमिदेशनां च प्रजानाति। स एवं ज्ञात्वा तथत्वाय सत्त्वेभ्यो धर्मं देशयति। यथाशयविभक्तितो यथानुशयविभक्तितो यथेन्द्रिय-

विभक्तितो यथाधिमुक्तिविभक्तितो यथागोचरविभागज्ञानोपसंहारतः सर्वगोचरज्ञानानुगमनतो यथाधातुगहनोपचारानुगमनतो यथागत्युपपत्तिक्लेशकर्मवासनानुवर्तनतो यथाराशिव्यवस्थानानुगमनतो यथायानाधिमोक्षविमुक्तिप्राप्तितोऽनन्तवर्णरूपकायसंदर्शनतः सर्वलोकधातुमनोज्ञस्वरविज्ञापनतः सर्वरुतरवितपरिज्ञानतः सर्वप्रतिसंविद्विनिश्चयकौशल्यतश्च धर्मं देशयति ॥

सोऽस्यां साधुमत्यां बोधिसत्त्वभूमौ स्थितः सन् बोधिसत्त्वो धर्मभाणकत्वं कारयति, 5 R 77
तथागतधर्मकोशं च रक्षति । स धर्मभाणकगतिमुपगतोऽप्रमाणज्ञानानुगतेन कौशल्येन चतुःप्रतिसंविदभिनिर्हृतया बोधिसत्त्ववाचा धर्मं देशयति । तस्य सततसमितमसंभिन्नाश्चतस्रो बोधिसत्त्वप्रतिसंविदोऽनुप्रवर्तन्ते । कतमाश्चतस्रः ? यदुत धर्मप्रतिसंवित् अर्थप्रतिसंवित् निरुक्तिप्रतिसंवित् प्रतिभानप्रतिसंवित् ॥

स धर्मप्रतिसंविदा स्वलक्षणं धर्माणां प्रजानाति । अर्थप्रतिसंविदा विभक्तिं धर्माणां 10
प्रजानाति । निरुक्तिप्रतिसंविदा असंभेददेशनां धर्माणां प्रजानाति । प्रतिभानप्रतिसंविदा अनुप्रबन्धानुपच्छेदतां धर्माणां प्रजानाति ॥

पुनरपरं धर्मप्रतिसंविदा अभावशरीरं धर्माणां प्रजानाति । अर्थप्रतिसंविदा उदयास्तगमनं धर्माणां प्रजानाति । निरुक्तिप्रतिसंविदा सर्वधर्मप्रज्ञप्त्यवच्छेदनधर्मं देशयति । प्रतिभानप्रतिसंविदा यथाप्रज्ञप्त्यविकोपनतापर्यन्ततया धर्मं देशयति ॥ 15

पुनरपरं धर्मप्रतिसंविदा प्रत्युत्पन्नविभक्तिं धर्माणां प्रजानाति । अर्थप्रतिसंविदा अतीतानागतविभक्तिं धर्माणां प्रजानाति । निरुक्तिप्रतिसंविदा अतीतानागतप्रत्युत्पन्नासंभेदतो धर्मं देशयति । प्रतिभानप्रतिसंविदा एकैकमध्वानमारभ्य अपर्यन्तधर्मालोकतया धर्मं देशयति ॥

पुनरपरं धर्मप्रतिसंविदा धर्मप्रभेदं प्रजानाति । अर्थप्रतिसंविदा अर्थप्रभेदं प्रजानाति । 20
निरुक्तिप्रतिसंविदा यथारुतदेशनतया धर्मं देशयति । प्रतिभानप्रतिसंविदा यथानुशयज्ञानं देशयति ॥

पुनरपरं धर्मप्रतिसंविदा धर्मज्ञानविभक्त्यसंभेदकौशल्यं प्रजानाति । अर्थप्रतिसंविदा R 78
अन्वयज्ञानतथात्वव्यवस्थानं प्रजानाति । निरुक्तिप्रतिसंविदा संवृतिज्ञानसंदर्शनासंभेदतया निर्दिशति । प्रतिभानप्रतिसंविदा परमार्थज्ञानकौशल्येन धर्मं देशयति ॥ 25

पुनरपरं धर्मप्रतिसंविदा एकनयाविकोपं धर्माणां प्रजानाति । अर्थप्रतिसंविदा स्कन्धधात्वायतनसत्यप्रतीत्यसमुत्पादकौशल्यानुगममवतरति । निरुक्तिप्रतिसंविदा सर्वजगदभिगमनीयसुमधुरगिरिनिर्घोषाक्षरैर्निर्दिशति । प्रतिभानप्रतिसंविदा भूयो भूयोऽपर्यन्तधर्मावभासतया निर्दिशति ॥

पुनरपरं धर्मप्रतिसंविदा एकयानसमवसरणनानात्वं प्रजानाति । अर्थप्रतिसंविदा 30
प्रविभक्तयानविमात्रतां प्रजानाति । निरुक्तिप्रतिसंविदा सर्वयानान्यभेदेन निर्दिशति । प्रतिभानप्रतिसंविदा एकैकं यानमपर्यन्तधर्मावभासेन देशयति ॥

पुनरपरं धर्मप्रतिसंविदा सर्वबोधिसत्त्वचरिज्ञानचरिधर्मचरिज्ञानानुगममवतरति । अर्थप्रतिसंविदा दशभूमिव्यवस्थाननिर्देशप्रविभक्तिमवतरति । निरुक्तिप्रतिसंविदा यथाभूमिमार्गोपसंहारसंभेदेन निर्दिशति । प्रतिभानप्रतिसंविदा एकैकां भूमिमपर्यन्ताकारेण निर्दिशति ॥

पुनरपरं धर्मप्रतिसंविदा सर्वतथागतैकलक्षणानुबोधमवतरति । अर्थप्रतिसंविदा 5 नानाकालवस्तुलक्षणविभङ्गानुगमं प्रजानाति । निरुक्तिप्रतिसंविदा यथाभिसंबोधिं विभक्तिनिर्देशेन निर्दिशति । प्रतिभानप्रतिसंविदा एकैकं धर्मपदमपर्यन्तकल्पाव्यवच्छेदेन निर्दिशति ॥

पुनरपरं धर्मप्रतिसंविदा सर्वतथागतवाग्बलवैशारद्यबुद्धधर्ममहाकरुणाप्रतिसंवित्प्रयोगधर्मचक्रानुप्रवर्तमानसर्वज्ञज्ञानानुगमं प्रजानाति । अर्थप्रतिसंविदा चतुरशीतिसत्त्वचरितसहस्राणां यथाशयं यथेन्द्रियं यथाधिमुक्तिविभक्तितस्तथागतघोषं प्रजानाति । निरुक्तिप्रति- R 79
10 संविदा सर्वसत्त्वचर्यासंभेदतस्तथागतघोषानुरवेण निर्दिशति । प्रतिभानप्रतिसंविदा तथागतज्ञानप्रभाचर्यामण्डलाधिमुक्त्या धर्मं देशयति ॥

स एवं प्रतिसंविदां ज्ञानाभिनिर्हारकुशलो भो जिनपुत्र बोधिसत्त्वो नवमीं बोधिसत्त्वभूमिमनुप्राप्तस्तथागतधर्मकोशप्राप्तो महाधर्मभाणकत्वं च कुर्वाणः अर्थवतीधारणीप्रतिलब्धश्च भवति । धर्मवती....। ज्ञानाभिनिर्हारवती.... । अवभासवती.... । वसुमती-
15 धारणी....। सुमतिधारणी....। तेजोधारणी....। असङ्गमुखधारणी....। अनन्त....। विचित्रार्थकोश....। स एवमादीनां धारणीपदानां परिपूर्णानि दशधारणीमुखासंख्येयशतसहस्राणि प्रतिलभते । तथा असंख्येयशतसहस्रानुगतेनैव स्वराङ्गकौशल्येन तावदप्रमाणानुगतेनैव प्रतिभानविभक्तिमुखेन धर्मं देशयति । स एवमप्रमाणैर्धारणीमुखासंख्येयशतसहस्रैर्दशसु दिक्षु अप्रमेयाणां बुद्धानां भगवतां सकाशाद्धर्मं शृणोति । श्रुत्वा च न विस्मारयति । यथाश्रुतं
20 च अप्रमाणविभक्तित एवं निर्दिशति ॥

स एकस्य तथागतस्य सकाशाद्दशभिर्धारणीमुखासंख्येयशतसहस्रैर्धर्मान् पर्यवाप्नोति । यथा चैकस्य, एवमपर्यन्तानां तथागतानाम् । स प्रणिधानमात्रेण बहुतरं सम्यक्संबुद्धसकाशाद्धर्ममुखालोकं संप्रतीच्छति, न त्वेव महाबाहुश्रुत्यप्राप्तः श्रावकः श्रुतोद्ग्रहणधारणीप्रतिलब्धः कल्पशतसहस्रोद्ग्रहणाधिष्ठानेन । स एवं धारणीप्राप्तश्च भवति प्रतिभानप्राप्तश्च धर्मसांकथ्यं
25 संनिषण्णः सर्वावतीं त्रिसाहस्रमहासाहस्रलोकधातुं स्फरित्वा यथाशयविभक्तितः सत्त्वेभ्यो धर्मं देशयति धर्मासने निषण्णः । धर्मासनं चास्य तथागतानभिषेकभूमिप्राप्तान् बोधिसत्त्वान् स्थापयित्वा सर्वतो विशिष्टमप्रमाणावभासप्राप्तं भवति । स धर्मासने निषण्ण आकाङ्क्षन् एकघोषोदाहारेण सर्वपर्षदं नानाघोषरुतविमात्रतया संज्ञापयति । आकाङ्क्षन् नानाघोषनानास्वराङ्गविभक्तिभिराज्ञापयति । आकाङ्क्षन् रश्मिमुखोपसंहारैर्धर्ममुखानि निश्चारयति । आकाङ्क्षन् R 80
30 सर्वरोमकूपेभ्यो घोषान्निश्चारयति । आकाङ्क्षन् यावत्त्रिसाहस्रमहासाहस्रायां लोकधातौ रूपावभासास्तेभ्यः सर्वरूपावभासेभ्यो धर्मरुतानि निश्चारयति । आकाङ्क्षन् एकस्वररुतेन सर्वधर्मधातुं विज्ञापयति । आकाङ्क्षन् सर्वरुतनिर्घोषेषु धर्मरुतमधितिष्ठति । आकाङ्क्षन्

सर्वलोकधातुपर्यापन्नेभ्यो गीतवाद्यतूर्यशब्देभ्यो धर्मरुतं निश्चारयति। आकाङ्क्षन् एकाक्षररुतात्सर्वधर्मपदप्रभेदरुतं निश्चारयति। आकाङ्क्षन् अनभिलाप्यानभिलाप्यलोकधातुपर्यन्ततः पृथिव्यप्तेजोवायुस्कन्धेभ्यः सूक्ष्मपरमाणुरजःप्रभेदत एकैकपरमाणुरजोनभिलाप्यानि धर्ममुखानि निश्चारयति। सचेत्तं त्रिसाहस्रमहासाहस्रलोकधातुपर्यापन्नः सर्वसत्त्वा उपसंक्रम्य एकक्षणलवमुहूर्तेन प्रश्नान् परिपृच्छेयुः, एकैकश्च तेषामप्रमाणरुतविमात्रतया परिपृच्छेत्, यं चैकः 5 सत्त्वः परिपृच्छेन्न तं द्वितीयः, तं बोधिसत्त्वः सर्वसत्त्वरुतपदव्यञ्जनमुद्गृह्णीयात्। उद्गृह्य चैकरुताभिव्याहारेण तेषां सर्वसत्त्वानां चित्ताशयान् परितोषयेत् (यावदनभिलाप्यलोकधातुपर्यापन्ना वा सत्त्वा उपसंक्रम्य एकक्षणलवमुहूर्तेन प्रश्नान् परिपृच्छेयुः, एकैकश्च तेषामप्रमाणरुतविमात्रतया परिपृच्छेत्, यं चैकः परिपृच्छेन्न तं द्वितीयः, तं बोधिसत्त्व एकक्षणलवमुहूर्तेनैव सर्वमुद्गृह्य एकोदाहारेणैव सर्वानाज्ञापयेत्। यावदनभिलाप्यानपि लोकधातून् स्फरित्वा यथाश- 10 येन्द्रियाधिमुक्तितः सत्त्वेभ्यो धर्मं देशयति। धर्मसांकथ्यं निषण्णश्च तथागताधिष्ठानसंप्रश्लेषकः सकलेन बुद्धकार्येण सर्वसत्त्वानां प्रत्युपस्थितो भवति। स भूयस्या मात्रया एवं ज्ञानावभासप्रग्रहणमारभते। सचेदेकस्मिन् वालाग्रप्रसरे यावन्त्यनभिलाप्येषु लोकधातुषु परमाणुरजांसि तावन्तस्तथागतास्तावदप्रमाणप्राप्तेष्वेव पर्षन्मण्डलेषु धर्मं देशयेयुः। एकैकश्च तथागतस्तावदप्रमाणप्राप्तेभ्यः सर्वसत्त्वेभ्यो नानात्वतो धर्मं देशयेत्, एकैकस्मिंश्च सत्त्वाशयसंताने तावद- 15 प्रमाणमेव धर्मोपसंहारमुपसंहरेत्। यथा चैकस्तथागतः पर्षन्मण्डले तथा ते सर्वे तथागताः। यथा चैकस्मिन् वालाग्रप्रसरे तथा सर्वस्मिन् धर्मधातौ। तत्रास्माभिस्तादृशं स्मृतिवैपुल्यमभिनिर्हर्तव्यं यथैकक्षणेन सर्वतथागतानां सकाशाद्धर्मावभासं प्रश्लेषेमहि एकरुताव्यतिरेकात्। यावन्ति च तानि यथापरिकीर्तितानि पर्षन्मण्डलानि नानानिकायधर्मप्रवणैकपरिपूर्णानि, तत्रास्माभिस्तादृशं प्रज्ञावभासविनिश्चयप्रतिभानं परिशोध्यं यदेकक्षणेन सर्वसत्त्वान् 20 R 81 परितोषयेत्, किं पुनरियत्सु लोकधातुषु सत्त्वानि॥

स इमां साधुमतीं बोधिसत्त्वभूमिमनुप्राप्तो बोधिसत्त्वो भूयस्या मात्रया रात्रिंदिवमनन्यमनसिकारप्रयुक्तो भूत्वा बुद्धगोचरानुप्रविष्टस्तथागतसमवधानप्राप्तो गम्भीरबोधिसत्त्वविमोक्षानुप्राप्तो भवति। स एवंज्ञानानुगतो बोधिसत्त्वः समाहितस्तथागतदर्शनं न विजहाति। एकैकस्मिंश्च कल्पेऽनेकान बुद्धान्, अनेकानि बुद्धशतानि.... अने- 25 कानि बुद्धकोटिनयुतशतसहस्राणि....। दृष्ट्वा च सत्करोति गुरुकरोति मानयति पूजयति। औदारिकेन बुद्धदर्शनेन पूजोपस्थानं नोत्सृजति। तांश्च तथागतान् प्रश्नान् परिपृच्छति। स धर्मधारणीनिर्देशाभिनिर्जातो भवति। तस्य भूयस्या मात्रया तानि कुशलमूलान्युत्तप्ततमान्यसंहार्याणि भवन्ति। तद्यथापि नाम भो जिनपुत्रास्तदेव जातरूपमाभरणीकृतं सुपरिनिष्ठितं कुशलेन कर्मारेण राज्ञश्चक्रवर्तिन उत्तमाङ्गे कण्ठे वा आबद्धमसंहार्यं भवति 30 सर्वकोट्टराजानां चातुर्द्वीपकानां च सत्त्वानामाभरणविकृतैः, एवमेव भो जिनपुत्रा बोधिसत्त्वस्य अस्यां साधुमत्यां बोधिसत्त्वभूमौ स्थितस्य तानि कुशलमूलानि महाज्ञानालोक-

सुविभक्तान्युत्तप्यन्ते, असंहार्याणि भवन्ति सर्वश्रावकप्रत्येकबुद्धैरधरभूमिस्थितैश्च बोधिसत्त्वैः। तस्य सा कुशलमूलाभा सत्त्वानां क्लेशचित्तगहनान्यवभास्य तत एव व्यावर्तते। तद्यथापि नाम भो जिनपुत्रा [1]द्विसाहस्रिको महाब्रह्मा सर्वस्मिन् द्विसाहस्रिके लोकधातौ गहननिम्नोपचारानवभासयति, एवमेव भो जिनपुत्रा बोधिसत्त्वस्य अस्यां साधुमत्यां बोधि-5 सत्त्वभूमौ स्थितस्य सा कुशलमूलाभा सत्त्वानां क्लेशचित्तगहनान्यवभास्य तत एव व्यावर्तते। तस्य दशभ्यः पारमिताभ्यो बलपारमिता अतिरिक्ततमा भवति, न च परिशेषासु न समुदाचरति यथाबलं यथाभजमानम्। इयं भवन्तो जिनपुत्रा बोधिसत्त्वस्य साधुमती नाम नवमी बोधिसत्त्वभूमिः[2]............ महाब्रह्मा भवति महाबलस्थामप्राप्तो द्विसाहस्राधि-पतिरभिभूः........पारमितोपदेशेष्वसंहार्यः सत्त्वाशयपरिपृच्छानिर्देशैः। यच्च किंचित्[3]....॥

साधुमती नाम नवमी भूमिः ॥



१ See page 14. २ See page 47. ३ See page 14 and change °शतं into °दशबुद्धक्षेत्रासंख्येयशतसहस्रपरमाणुरजःसमं.

## १० धर्ममेघा नाम दशमी भूमिः ।

वज्रगर्भो बोधिसत्त्व आह—योऽयं भवन्तो जिनपुत्रा बोधिसत्त्व एवमप्रमाणज्ञेय- R 82
विचारितया बुद्धया यावन्नवमी बोधिसत्त्वभूमिरिति सुविचितविचयः सुपरिपूर्णशुक्लधर्मः
अपर्यन्तसंभारोपचयोपचितः सुपरिगृहीतमहापुण्यज्ञानसंभारः महाकरुणावैपुल्याधिगतः लोक-
धातुविभक्तिवैमात्र्यकोविदः सत्त्वधातुप्रविष्टगहनोपचारः तथागतगोचरप्रवेशानुगतसंज्ञामन- 5
सिकारः बलवैशारद्यबुद्धधर्माध्यालम्बनानुगतः सर्वाकारसर्वज्ञज्ञानाभिषेकभूमिप्राप्त इत्युच्यते ॥

तस्य खलु पुनर्भवन्तो जिनपुत्रा एवंज्ञानानुगतस्य बोधिसत्त्वस्य अभिषेकभूमिसमा-
पन्नस्य विमलो नाम समाधिरामुखीभवति । धर्मधातुविभक्तिप्रवेशश्च नाम । बोधिमण्डा-
लंकारव्यूहश्च नाम । सर्वाकाररश्मिकुसुमश्च नाम । सागरगर्भश्च नाम । सागरसमृद्धिश्च
नाम । आकाशधातुविपुलश्च नाम । सर्वधर्मस्वभावविचयश्च नाम । सर्वसत्त्वचित्तचरि- 10
तानुगतश्च नाम । प्रत्युत्पन्नसर्वबुद्धसंमुखावस्थितश्च नाम बोधिसत्त्वसमाधिरामुखीभवति ।
तस्यैवंप्रमुखानि दश समाध्यसंख्येयशतसहस्राण्यामुखीभवन्ति । स तान् सर्वान् समाधीन्
समापद्यते च व्युत्तिष्ठते च, समाधिकौशल्यानुगतश्च यावत्समाधिकार्यं तत्सर्वं प्रत्यनुभवति ।
तस्य यावद्दशसमाध्यसंख्येयशतसहस्राणां पर्यन्ते सर्वज्ञज्ञानविशेषाभिषेकवान्नाम बोधिसत्त्व-
समाधिरामुखीभवति ॥ 15

यस्मिन् समनन्तराभिमुखीभूते दशत्रिसाहस्रशतसहस्रापर्यन्तप्रमाणं महारत्नराजपद्मं
प्रादुर्भवति सर्वाकाररत्नप्रत्यर्पितं सर्वलोकविषयसमतिक्रान्तं लोकोत्तरकुशलमूलसंभूतं
मायास्वभावगोचरपरिनिष्पन्नं धर्मधातुसुव्यवस्थितावभासं दिव्यविषयसमतिक्रान्तं महावैडूर्य-
मणिरत्नदण्डमतुल्यचन्दनराजकर्णिकं महाश्मगर्भकेसरं जाम्बूनदसुवर्णावभासपत्रमपरि- R 83
मितरश्मिसंकुसुमितशरीरं सर्वप्रवररत्नप्रत्युप्तगर्भमपर्यन्तमहारत्नजालसंछन्नं परिपूर्णदश- 20
त्रिसाहस्रशतसहस्रपरमाणुरजःसममहारत्नपद्मपरिवारम् । तदनुगतस्तदनुरूपश्च तस्य
बोधिसत्त्वस्य कायः संतिष्ठते । स तस्य सर्वज्ञज्ञानविशेषाभिषेकवतः समाधेः सहप्रतिलम्भा-
त्तस्मिन्महारत्नराजपद्मे निषण्णः संदृश्यते । समनन्तरनिषण्णश्च स बोधिसत्त्वस्तस्मिन्
महारत्नराजपद्मे, अथ यावन्ति तस्य महारत्नराजपद्मस्य महापद्मानि परिवारः प्रादुर्भूतः,
तावन्तो बोधिसत्त्वा दशदिग्लोकधातुसंनिपतितास्तं बोधिसत्त्वमनुपरिवार्य तेषु महारत्न- 25
पद्मेषु निषीदन्ति । एकैकश्च तेषां दश समाधिशतसहस्राणि समापद्यते तमेव बोधिसत्त्वं
निरीक्षमाणः ॥

समनन्तरसमापन्ने च तस्मिन् बोधिसत्त्वे तेषु च बोधिसत्त्वेषु निरवशेषम्, अथ सर्व-
लोकधातुसंप्रकम्पनं भवति । सर्वापायप्रतिप्रस्रम्भणं च, सर्वधर्मधात्ववभासकरणं च, सर्व-
लोकधातुपरिशोधनं च, सर्वबुद्धक्षेत्रनामधेयरुतानुरवणं च, सर्वसभागचरितबोधिसत्त्व- 30

संनिपातनं च सर्वलोकधातुदेवमनुष्यतूर्यसंगीतिसंप्रवादनं च सर्वसत्त्वसुखसंजननं च सर्वसम्यक्संबुद्धाचिन्त्यपूजोपस्थानप्रवर्तनं च सर्वतथागतपर्षन्मण्डलविज्ञापनं च भवति। तत्कस्य हेतोः? तथा हि भो जिनपुत्रास्तस्य बोधिसत्त्वस्य समनन्तरनिषण्णस्य तस्मिन् महारत्नराजपद्मे अधस्ताच्चरणतलाभ्यां दशरश्म्यसंख्येयशतसहस्राणि निश्चरन्ति। निश्चर्य दश-
5 दिशमवीचिपर्यन्तान् महानिरयानवभासयन्ति। नैरयिकानां सत्त्वानां सर्वदुःखानि प्रति-प्रस्रम्भयति। जानुमण्डलाभ्यां दश....दशदिशं सर्वतिर्यग्योनिभवनान्यवभासयन्ति, सर्व-तिर्यग्योनिदुःखानि च प्रशमयन्ति। नाभिमण्डलाद् दश....सर्वयमलोकभवनानि अवभास-यन्ति, सर्वयमलौकिकानां सत्त्वानां दुःखानि च प्रशमयन्ति। वामदक्षिणाभ्यां पार्श्वाभ्यां... मनुष्याश्रयान्....मनुष्य....। उभाभ्यां पाणिभ्यां देवासुरभवनानि.... देवासुर....।
R 84 10 अंसाभ्यां .... श्रावकयानीयाश्रयानवभासयन्ति, धर्मालोकमुखं चोपसंहरन्ति। पृष्ठतो ग्रीवायाश्च .... प्रत्येकबुद्धाश्रयानवभासयन्ति, शान्तिसमाधिमुखनयं चोपसंहरन्ति। मुखद्वाराद्....प्रथमचित्तोपादमुपादाय यावन्नवमीं भूमिमनुप्राप्तान् बोधिसत्त्वानवभासयन्ति, प्रज्ञोपायकौशल्यनयं चोपसंहरन्ति। ऊर्णाकोशाद्दशरश्म्यसंख्येयशतसहस्राणि निश्चरन्ति, निश्चर्य दशसु दिक्षु सर्वमारभवनान्यवभास्य ध्यामीकृत्य अभिषेकभूमिप्राप्तान् बोधिसत्त्वान्
15 अवभास्य तत्कायेष्वेवास्तं गच्छन्ति। उपर्युत्तमाङ्गात् परिपूर्णदशत्रिसाहस्रासंख्येयशत-सहस्रपरमाणुरजःसमा रश्मयो निश्चरन्ति, निश्चर्य दशसु दिक्षु धर्मधातुप्रमाणान्याकाश-धातुपर्यवसानानि सर्वतथागतपर्षन्मडलान्यवभास्य दशाकारं लोकं प्रदक्षिणीकृत्य उपरि-खगपथे स्थित्वा महारश्मिजालमण्डलानि कृत्वा उत्तप्तप्रभासं नाम महत्तथागत-पूजोपस्थानं सर्वतथागतानामनुप्रवर्तयन्ति। तस्य पूजोपस्थानस्य प्रथमचित्तोत्पादमुपादाय
20 यावन्नवमीभूम्यनुप्रवर्तितं तथागतपूजोपस्थानं[1]....। ततः खल्वपि महारश्मिजालमण्डलाद्यावती दशसु दिक्षु निरवशेषसर्वधर्मधात्वन्तर्गता पुष्पप्रज्ञप्तिर्वा गन्धधूपमाल्यविलेपनचूर्णचीवर-च्छत्रध्वजपताकावस्त्राभरणमणिरत्नप्रज्ञप्तिर्वा, ततोऽतिरिक्ततराः सर्वलोकविषयसमतिक्रान्ता लोकोत्तरकुशलमूलसंभाराधिपत्याभिनिर्वृत्ताः सर्वाकारगुणसंपन्ना अचिन्त्यनिर्वाणाधिष्ठाना-धिष्ठिता नानाव्यूहमहारत्नवर्षा इव एकैकतथागतपर्षन्मण्डले महामेघा इवाभिप्रवर्षन्ति स्म।
25 तां च ये सत्त्वाः पूजां संजानन्ते, ते सर्वे नियता भवन्त्यनुत्तरायां सम्यक्संबोधौ। एवंरूपं पूजोपस्थानं प्रवर्त्य ता रश्मयः पुनरेव सर्वावन्ति तथागतपर्षन्मण्डलान्यवभास्य दशाकारं लोकं प्रदक्षिणीकृत्य तेषां तथागतानामर्हतां सम्यक्संबुद्धानामधस्तात्क्रमतलेषु अस्तं गच्छन्ति। ततस्तेषां तथागतानां तेषां च बोधिसत्त्वानां विदितं भवति—अमुष्मिन् लोकधातु-प्रसरे एवंचर्यानुगतो बोधिसत्त्वोऽभिषेककालप्राप्त इति। तत्र भो जिनपुत्रा दशभ्यो
30 दिग्भ्योऽपर्यन्तेभ्यो लोकधातुप्रसरेभ्योऽप्रमेयासंख्येयापर्यन्ता बोधिसत्त्वा यावन्नवमीबोधिसत्त्व-भूमिप्रतिष्ठिता आगत्य तं बोधिसत्त्वमनुपरिवार्य महतीं पूजां कृत्वा तमेव बोधिसत्त्वं

---

[1] See page 42.

निरीक्षमाणा दश समाधिशतसहस्राणि समापद्यन्ते । अभिषेकभूमिप्राप्तानां च बोधिसत्त्वानां कायेभ्यः श्रीवत्सालंकाराद्वज्रस्वस्तिकात् सर्वमारशत्रुविजयो नामैकैका महारश्मिर्दशरश्म्यसं- R 85
ख्येयशतसहस्रपरिवारा निश्चरति, निश्चर्य दशदिशोऽवभास्य अपर्यन्तानि प्रातिहार्याणि संदर्श्य तस्य बोधिसत्त्वस्य श्रीवत्सालंकारे वज्रस्वस्तिक एवास्तं गच्छति । समनन्तरादस्तमितायाश्च तस्या रश्म्याः शतसहस्रगुणोत्तरा तस्य बोधिसत्त्वस्य बलस्थामाभिवृद्धिः प्रज्ञायते ॥ 5

अथ खलु भो जिनपुत्राः सर्वज्ञताभिज्ञावत्यो नाम रश्मयस्तेषां तथागतानामर्हतां सम्यक्संबुद्धानामूर्णाकोशेभ्यो निश्चरन्त्यसंख्येयपरिवाराः । ताः सर्वासु दशसु दिक्षु अशेषतः सर्वलोकधातूनवभास्य दशाकारं लोकं प्रदक्षिणीकृत्य महान्ति तथागतविकुर्वितानि संदर्श्य बहूनि बोधिसत्त्वकोटिनियुतशतसहस्राणि संचोद्य सर्वबुद्धक्षेत्रप्रसरान् षड्विकारं संप्रकम्प्य सर्वापायच्युतिगत्युपपत्तीः प्रशम्य सर्वमारभवनानि ध्यामीकृत्य सर्वतथागताभिसंबोधिविबुद्ध- 10
बुद्धासनान्युपसंदर्श्य सर्वबुद्धपर्षन्मण्डलव्यूहप्रभावं निदर्श्य धर्मधातुपरमानाकाशधातुपर्यव-सानान् सर्वलोकधातूनवभास्य पुनरेवागत्य तं सर्वावन्तं बोधिसत्त्वपर्षत्संनिपातमुपर्युपरि प्रदक्षिणीकृत्य महाव्यूहान्निदर्श्य ता रश्मयस्तस्य बोधिसत्त्वस्योत्तमाङ्गेऽस्तं गच्छन्ति । तत्परि-वाररश्मयश्च तथा संनिपतितानां तेषां बोधिसत्त्वानां शिरस्स्वन्तर्धीयन्ते स्म । समनन्तरसंनि-पतिताभिश्च ताभी रश्मिभिस्ते बोधिसत्त्वा अप्रतिलब्धपूर्वाणि दश समाधिशतसहस्राणि 15
प्रतिलभन्ते । ताश्च रश्मयस्तुल्यकालं तस्य बोधिसत्त्वस्योत्तमाङ्गे निपतिता भवन्ति । स च बोधिसत्त्वोऽभिषिक्त इत्युच्यते सम्यक्संबुद्धविषये । दशबलपरिपूर्या तु सम्यक्संबुद्ध इति संख्यां गच्छति । तद्यथापि नाम भो जिनपुत्रा यो राज्ञश्चक्रवर्तिनः पुत्रो ज्येष्ठः कुमारोऽग्र्य-महिषीप्रसूतश्चक्रवर्तिराजलक्षणसमन्वागतो भवति, तं राजा चक्रवर्ती दिव्ये हस्तिसौवर्णे भद्रपीठे निषाद्य, चतुर्भ्यो महासमुद्रेभ्यो वार्यानीय, उपरिरत्नविमानेन धार्यमाणेन महता 20
पुष्पधूपगन्धदीपमाल्यविलेपनचूर्णचीवरच्छत्रध्वजपताकातूर्यतालावचरसंगीतिव्यूहेन सौवर्णं भृङ्गारं गृहीत्वा तेन वारिणा तं कुमारं मूर्धन्यभिषिञ्चति । समनन्तराभिषिक्तश्च राजा क्षत्रियो मूर्धाभिषिक्त इति संख्यां गच्छति । दशकुशलकर्मपथपरिपूर्या तु चक्रवर्तीति संज्ञां R 86
प्रतिलभते । एवमेव भो जिनपुत्राः समनन्तराभिषिक्तो बोधिसत्त्वस्तैर्बुद्धैर्भगवद्भिर्महाज्ञाना-भिषेकाभिषिक्त इत्युच्यते । सम्यक्संबुद्धाभिषेकेण दशबलपरिपूर्या तु सम्यक्संबुद्ध इति 25
संख्यां गच्छति । अयं भो जिनपुत्रा बोधिसत्त्वस्य महाज्ञानाभिषेको यस्यार्थे बोधिसत्त्वोऽ-नेकानि दुष्करशतसहस्राण्यारभते । स एवमभिषिक्तोऽप्रमेयगुणज्ञानविवर्धितो धर्ममेघायां बोधिसत्त्वभूमौ प्रतिष्ठित इत्युच्यते ॥

सोऽस्यां धर्ममेघायां बोधिसत्त्वभूमौ प्रतिष्ठितो बोधिसत्त्वो धर्मधातुसमुदागमं च यथाभूतं प्रजानाति । कामधातुसमुदागमं च यथाभूतं प्रजानाति । रूपधातुसमुदागमं च 30
यथाभूतं प्रजानाति । आरूप्यधातुसमुदागमं च यथाभूतं प्रजानाति । लोकधातुसमुदागमं च यथाभूतं प्रजानाति । सर्वसत्त्वधातुसमुदागमं च यथाभूतं प्रजानाति । विज्ञानधातुसमुदा-

गमं च यथाभूतं प्रजानाति। संस्कृतासंस्कृतधातुसमुदागमं च यथाभूतं प्रजानाति। आकाशधातुसमुदागमं च यथाभूतं प्रजानाति। भूताभूतदेशनां च यथाभूतं प्रजानाति। निर्वाणं च यथाभूतं प्रजानाति। दृष्टिक्लेशसमुदागमं च यथाभूतं प्रजानाति। लोकधातुप्रवृत्तिनिवृत्तिसमुदागमं च यथाभूतं प्रजानाति। श्रावकचर्यासमुदागमं च यथाभूतं
5 प्रजानाति। प्रत्येकबुद्धचर्यासमुदागमं च यथाभूतं प्रजानाति। बोधिसत्त्वचर्यासमुदागमं च यथाभूतं प्रजानाति। तथागतबलवैशारद्यावेणिकबुद्धधर्मरूपकायधर्मकायसमुदागमं च यथाभूतं प्रजानाति। सर्वाकारसर्वज्ञज्ञानसमुदागमं च यथाभूतं प्रजानाति। अभिसंबोधिधर्मचक्रप्रवृत्तिसंदर्शनसमुदागमं च यथाभूतं प्रजानाति। समासतः सर्वधर्मप्रवेशविभक्तिनिस्तीर्णसमुदागमं च यथाभूतं प्रजानाति। स एवंज्ञानानुगतया बुद्ध्या उत्तरि सत्त्वकायनिर्माणं
10 च यथाभूतं प्रजानाति। क्लेशकायनिर्माणं च यथाभूतं प्रजानाति। दृष्टिकृतनिर्माणं च.... लोकधातुनिर्माणं च....धर्मधातुनिर्माणं च....श्रावकनिर्माणं च....प्रत्येकबुद्धनिर्माणं च.... बोधिसत्त्वनिर्माणं च....तथागतनिर्माणं च....सर्वनिर्माणकल्पाकल्पतां च यथाभूतं प्रजानाति। सर्वबुद्धाधिष्ठानं च....धर्माधिष्ठानं च....संघाधिष्ठानं च....कर्माधिष्ठानं च क्लेशाधिष्ठानं च....कालाधिष्ठानं च....प्रणिधानाधिष्ठानं च....पूजाधिष्ठानं च....चर्याधिष्ठानं
15 च....कल्पाधिष्ठानं च....ज्ञानाधिष्ठानं च प्रजानाति। स यानीमानि तथागतानामर्हतां सम्यक्संबुद्धानां सूक्ष्मप्रवेशज्ञानानि यदुत चर्यासूक्ष्मप्रवेशज्ञानं वा, च्युत्युपपत्तिसूक्ष्मप्रवेशज्ञानं वा, जन्मसूक्ष्मप्रवेशज्ञानं वा, अभिनिष्क्रमणसूक्ष्मप्रवेशज्ञानं वा, अभिसंबोधिसूक्ष्मप्रवेशज्ञानं वा, विकुर्वणसूक्ष्मप्रवेशज्ञानं वा, धर्मचक्रप्रवर्तनसूक्ष्मप्रवेशज्ञानं वा, धर्मदेशनासूक्ष्मप्रवेशज्ञानं वा, धर्मविस्तरसूक्ष्मप्रवेशज्ञानं वा, आयुःप्रमाणाधिष्ठानज्ञानं वा, वर्णरूप-
20 कायसंदर्शनज्ञानं वा, सर्वसत्त्वविनयातिक्रमणज्ञानं वा, सर्वलोकधातुस्फरणज्ञानं वा, सर्वसत्त्वचित्तचरितव्यवलोकनज्ञानं वा, एकक्षणे त्र्यध्वव्यवलोकनज्ञानं वा, पूर्वान्तापरान्तनिरवशेषज्ञानं वा, सर्वसत्त्वचित्तचरितनानात्वसमन्तज्ञानं वा, तथागतबलवैशारद्यबुद्धधर्माचिन्त्यज्ञानं वा, तथागतपरिनिर्वाणज्ञानं वा, शासनाधिष्ठानसद्धर्मस्थितिज्ञानं वा, एवंप्रमुखान्यप्रमेयासंख्येयानि तथागतानां सूक्ष्मप्रवेशज्ञानानि, तानि सर्वाणि यथाभूतं प्रजानाति।

R 87

25 स यानीमानि तथागतानामर्हतां सम्यक्संबुद्धानां गुह्यस्थानानि यदुत कायगुह्यं वा वाग्गुह्यं वा चित्तगुह्यं वा कालाकालविचारणागुह्यं वा बोधिसत्त्वव्याकरणगुह्यं वा सत्त्वसंग्रहनिग्रहगुह्यं वा विनेयोत्सादनावसानगुह्यं वा यथाकालाववादानुशासनाध्युपेक्षणं वा याननानात्वव्यवस्थापनगुह्यं वा सत्त्वचर्येन्द्रियविभक्तिगुह्यं वा सत्त्वकर्मक्रियावतारगुह्यं वा बोधिसत्त्वचर्येन्द्रियविभक्तिगुह्यं वा चर्याभिसंबोधिस्वभावप्रभावानुबोधिगुह्यं वा स्वभावाभिसंबोध्य-
30 धिष्ठानगुह्यं वा अवतारोत्तारणगुह्यं वा आकर्षणसंप्रेषणगुह्यं वा स्थानचंक्रमणनिषद्याशय्यासनसंदर्शनगुह्यं वा आहारपरिभोगकायोपकरणप्रतिसेवनगुह्यं वा भाषिततूष्णींभावध्यानविमोक्षसमाधिसमापत्तिसंदर्शनगुह्यं वा, एवंप्रमुखान्यप्रमेयासंख्येयानि तथागतानां

गुह्यस्थानानि, तानि सर्वाणि यथाभूतं प्रजानाति । स यानीमानि तथागतानां कल्पप्रवेशसमवसरणज्ञानानि यदुत एककल्पासंख्येयकल्पसमवसरणता । असंख्येयकल्पैककल्पसमवसरणता । संख्येयकल्पासंख्येयकल्पसमवसरणता । असंख्येयकल्पसंख्येयकल्पसमवसरणता । चित्तक्षणकल्पसमवसरणता । कल्पचित्तक्षणसमवसरणता । कल्पाकल्पसमवसरणता । अकल्पकल्पसमवसरणता । सबुद्धककल्पाबुद्धककल्पसमवसरणता । अबुद्धककल्पसबुद्धककल्पसमवसरणता । अतीतानागतकल्पप्रत्युत्पन्नकल्पसमवसरणता । प्रत्युत्पन्नकल्पातीतानागतकल्पसमवसरणता । अतीतकल्पानागतकल्पसमवसरणता । अनागतकल्पातीतकल्पसमवसरणता । दीर्घकल्पह्रस्वकल्पसमवसरणता । ह्रस्वकल्पदीर्घकल्पसमवसरणता । सर्वकल्पेषु संज्ञाकृतसमवसरणता । सर्वसंज्ञाकृतेषु कल्पसमवसरणता । एवंप्रमुखान्यप्रमेयाण्यसंख्येयानि कल्पप्रवेशसमवसरणानि, तानि सर्वाणि यथाभूतं प्रजानाति । स यानीमानि तथागतानामर्हतां सम्यक्संबुद्धानामवतारज्ञानानि यदुत वालपथावतारज्ञानं वा परमाणुरजोवतारज्ञानं वा बुद्धक्षेत्रकायाभिसंबोध्यवतारज्ञानं वा सत्त्वकायचित्ताभिसंबोध्यवतारज्ञानं वा सर्वत्रानुगताभिसंबोध्यवतारज्ञानं वा व्यत्यस्तचरिसंदर्शनावतारज्ञानं वा अनुलोमचरिसंदर्शनावतारज्ञानं वा प्रतिलोमचरिसंदर्शनावतारज्ञानं चिन्त्याचिन्त्यलोकविज्ञेयविज्ञेयं चरिसंदर्शनावतारज्ञानं वा श्रावकविज्ञेयप्रत्येकबुद्धविज्ञेयबोधिसत्त्वविज्ञेयतथागतविज्ञेयचरिसंदर्शनावतारज्ञानं वा, तानि सर्वाणि यथाभूतं प्रजानाति । इति हि भो जिनपुत्रा अप्रमेयं बुद्धानां भगवतां ज्ञानवैपुल्यमप्रमाणमेवास्यां भूमौ स्थितस्य बोधिसत्त्वस्यावतारज्ञानम् ॥

स खलु पुनर्भो जिनपुत्रा बोधिसत्त्व एवमिमां बोधिसत्त्वभूमिमनुगतोऽचिन्त्यं च नाम बोधिसत्त्वविमोक्षं प्रतिलभते । अनावरणं च नाम विशुद्धिविचयं च नाम समन्तमुखावभासं च नाम तथागतकोशं च नाम अप्रतिहतचक्रानुगतं च नाम त्र्यध्वानुगतं च नाम धर्मधातुगर्भं च नाम विमुक्तिमण्डलप्रभासं च नाम अशेषविषयगमं च नाम बोधिसत्त्वविमोक्षं प्रतिलभते । इति हि भो जिनपुत्रा इमान् दश बोधिसत्त्वविमोक्षान् प्रमुखान् कृत्वा अप्रमेयासंख्येयानि बोधिसत्त्वविमोक्षमुखशतसहस्राणि बोधिसत्त्वोऽस्यां दशम्यां बोधिसत्त्वभूमौ प्रतिष्ठितः प्रतिलभते । एवं यावत्समाधिशतसहस्राणि धारणीशतसहस्राणि अभिज्ञाभिनिर्हारशतसहस्राणि प्रतिलभते । ज्ञानालोकशतसहस्राणि विकुर्वणशतसहस्राणि प्रतिसंविन्निर्हारशतसहस्राणि उपायप्रज्ञाविक्रीडितशतसहस्राणि गम्भीरधर्मनयप्रवेशशतसहस्राणि महाकरुणावेगशतसहस्राणि बोधिसत्त्ववशिताप्रवेशशतसहस्राणि प्रतिलभते ॥ R 88

स एवंज्ञानानुगतया बुद्ध्या अप्रमाणानुगतेन स्मृतिकौशल्येन समन्वागतो भवति । स दशभ्यो दिग्भ्योऽप्रमेयाणां बुद्धानां भगवतां सकाशादेकक्षणलवमुहूर्तेना अप्रमाणान् महाधर्मावभासान् महाधर्मालोकान् महाधर्ममेघान् सहते संप्रतीच्छति स्वीकरोति

संधारयति। तद्यथापि नाम भो जिनपुत्राः सागरनागराजमेघविसृष्टो महानप्स्कन्धो न सुकरोऽन्येन पृथिवीप्रदेशेन सोढुं वा संप्रत्येषितुं वा स्वीकर्तुं वा संधारयितुं वा अन्यत्र महासमुद्रात्, एवमेव भो जिनपुत्रा ये ते तथागतानां भगवतां गुह्यानुप्रवेशा यदुत महाधर्मावभासा महाधर्मालोका महाधर्ममेघाः, ते न सुकराः सर्वसत्त्वैः सर्वश्रावकप्रत्येकबुद्धैः
5 प्रथमां भूमिमुपादाय यावन्नवमीभूमिप्रतिष्ठितैरपि बोधिसत्त्वैः, तान् बोधिसत्त्वोऽस्यां धर्ममेघायां बोधिसत्त्वभूमौ स्थितः सर्वान् सहते संप्रतीच्छति स्वीकरोति संधारयति। तद्यथापि नाम भो जिनपुत्रा महासमुद्र एकस्यापि महाभुजगेन्द्रस्य महामेघान् सहते....द्वयोरपि त्रयाणामपि यावदपरिमाणानामपि भुजगेन्द्राणामेकक्षणलवमुहूर्तेनाप्रमेयान् महामेघान् सहते....। तत्कस्य हेतोः? अप्रमाणविपुलविस्तीर्णत्वान्महासमुद्रस्य। एवमेव भो जिनपुत्रा अस्यां धर्ममेघायां R 89
10 बोधिसत्त्वभूमौ प्रतिष्ठितो बोधिसत्त्व एकस्यापि तथागतस्य सकाशादेकक्षण....द्वयोरपि त्रयाणामपि यावदपरिमाणानामपि तथागतानां सकाशादेकक्षण....। तत उच्यत इयं भूमिर्धर्ममेघेति॥

विमुक्तिचन्द्रो बोधिसत्त्व आह—शक्यं पुनर्भो जिनपुत्र संख्यां कर्तुं कियतां तथागतानामन्तिकेभ्यो बोधिसत्त्वैकक्षण....? वज्रगर्भो बोधिसत्त्व आह—न सुकरा भो
15 जिनपुत्र संख्या कर्तुं गणनानिर्देशेन—इयतां तथागतानामन्तिकेभ्यो बोधिसत्त्वैकक्षण....। अपि तु खल्वौपम्यं करिष्यामि। तद्यथापि नाम भो जिनपुत्र दशसु दिक्षु दशबुद्धक्षेत्रानभिलाप्यकोटिनियुतशतसहस्रपरमाणुरजःसमासु लोकधातुषु यावत् सत्त्वधातुनिरवशेषयोगेन संविद्यते। तत एकः सत्त्वः श्रुतग्रहणधारणीप्रतिलब्धो भवेत्तथागतानामुपस्थायको महाश्रावकोऽग्र्यः श्रुतधराणाम्। तद्यथापि नाम भगवतो वज्रपद्मोत्तरस्य तथागतस्यार्हतः
20 सम्यक्संबुद्धस्य महाविजयो नाम भिक्षुरेवंरूपेण श्रुतकौशल्यबलाधानेन स एकः सत्त्वः समन्वागतो भवेत्। यथा च स एकः सत्त्वस्तथा निरवशेषासु सर्वासु लोकधातुषु ते सर्वे सत्त्वाः समन्वागता भवेयुः। यच्चैकेनोद्गृहीतं स्यान्न द्वितीयेन। तत्किं मन्यसे भो जिनपुत्र बहुतरं तेषामप्रमेयाप्रमाणं वा श्रुतकौशल्यं भवेत्? विमुक्तिचन्द्रो बोधिसत्त्व आह—बहु भो जिनपुत्र अप्रमाणं तत्तेषां सर्वसत्त्वानां श्रुतकौशल्यं भवेत्। वज्रगर्भो बोधिसत्त्व आह—
25 आरोचयामि ते भो जिनपुत्र, प्रतिवेदयामि। यं धर्ममेघायां बोधिसत्त्वभूमौ प्रतिष्ठितो बोधिसत्त्व एकक्षणलवमुहूर्तेनैकस्यैव तावत्तथागतस्य सकाशाद्धर्मधातुत्र्यध्वकोशं नाम महाधर्मावभासालोकमेघं सहते....। यस्य महाधर्मावभासालोकमेघसंधारणकौशल्यस्य तत् पूर्वकं श्रुतकौशल्यं....क्षमते। यथा चैकस्य तथागतस्य सकाशात्तथा दशसु दिक्षु यावन्ति तासु पूर्विकासु लोकधातुषु परमाणुरजांसि संविद्यन्ते, तावतां सम्यक्संबुद्धानां ततोऽपि भूय उत्तरि
30 अप्रमेयाणां तथागतानां सकाशादेकक्षणलवमुहूर्तेन धर्मधातुत्र्यध्वकोशं नाम महाधर्मावभासालोकमेघं सहते...। तत उच्यत इयं भूमिर्धर्ममेघेति॥

1 See page. 42.

पुनरपरं भो जिनपुत्र धर्ममेघायां बोधिसत्त्वभूमौ प्रतिष्ठितो बोधिसत्त्वः स्वप्रणिधान-बलाधानतो महाकृपाकरुणामेघं समुत्थाप्य महाधर्मावभासगर्जनमभिज्ञाविद्यावैशारद्यविद्युद्विद्योतितं महारश्मिमारुतसमीरितं महापुण्यज्ञानघनाभ्रजालसंदर्शनं विविधकायघनावर्तसंदर्शनं महाधर्मनिर्नादनं नमुचिपर्षद्विद्रावणमेकक्षणलवमुहूर्तेन दशसु दिक्षु यावन्ति तासु लोकधातुषु तानि परमाणुरजांसि संविद्यन्ते तावन्ति लोकधातुकोटिनयुतशतसहस्राणि स्फरित्वा तेभ्योऽपि भूयोऽप्रमेयाणि लोकधातुकोटिनयुतशतसहस्राणि स्फरित्वा महामृतकुशलधाराभिप्रवर्षणेन यथाशयतः सत्त्वानामज्ञानसमुत्थिताः सर्वक्लेशरजोज्वालाः प्रशमयति। तत उच्यत इयं भूमिर्धर्ममेघेति ॥

पुनरपरं भो जिनपुत्र धर्ममेघायां बोधिसत्त्व एकस्यामपि लोकधातौ तुषितवरभवन-वासमुपादाय च्यवनाचंक्रमणगर्भस्थितिजन्माभिनिष्क्रमणाभिसंबोध्यध्येषणमहाधर्मचक्रप्रवर्तन-महापरिनिर्वाणभूमिरिति सर्वतथागतकार्यमधितिष्ठति यथाशयेषु सत्त्वेषु यथावैनेयिकेषु, एवं द्वयोरपि यावद्यावन्ति तासु लोकधातुषु परमाणुरजांसि संविद्यन्ते, ततोऽपि भूयोऽप्रमेयेषु लोकधातुकोटिनियुतशतसहस्रेषु तानि परमाणु...वैनेयिकेषु ॥

स एवंज्ञानवशिताप्राप्तः सुविनिश्चितमहाज्ञानाभिज्ञ आकाङ्क्षन् संक्लिष्टाया लोकधातोः परिशुद्धतामधितिष्ठति। परिशुद्धाया लोकधातोः संक्लिष्टतामधितिष्ठति। संक्षिप्ताया लोक-धातोर्विस्तीर्णतामधितिष्ठति। विस्तीर्णायाः संक्षिप्ततामधितिष्ठति। एवं विपुलमहद्गताप्रमाण-सूक्ष्मौदारिकव्यत्यस्तावमूर्धमतलादीनां सर्वलोकधातूनां वृषभतयानन्तमभिनिर्हारमधितिष्ठति। आकाङ्क्षन् एकस्मिन् परमाणुरजस्येकामपि लोकधातुं सर्वावतीं सचक्रवालपरिखामधितिष्ठति। तच्च परमाणुरजो न वर्धयति तां च क्रियामादर्शयति। द्वेऽपि तिस्रोऽपि चतस्रोऽपि पञ्चापि यावदनभिलाप्यापि लोकधातुरेकस्मिन् परमाणुरजसि सर्वाः सचक्रवालपरिखा अधितिष्ठति। आकाङ्क्षन् एकस्यां लोकधातौ द्विलोकधातुव्यूहमादर्शयति। आकाङ्क्षन् यावदनभिलाप्य-लोकधातुव्यूहमादर्शयति। आकाङ्क्षन् एकलोकधातुव्यूहं द्वयोर्लोकधात्वोरादर्शयति। यावदनभिलाप्यासु लोकधातुष्वादर्शयति। आकाङ्क्षन् यावदनभिलाप्यासु लोकधातुषु यः सत्त्वधातुस्तमेकस्यां लोकधातौ संदधाति, न च सत्त्वान् विहेठयति। आकाङ्क्षन् एकस्यां लोकधातौ यावान् सत्त्वधातुस्तमनभिलाप्यासु लोकधातुषु संदधाति....। आकाङ्क्षन् अनभिलाप्यलोकधातुगतान् सत्त्वानेकवालपथे संदधाति....। आकाङ्क्षन् एकवालपथे एकं सर्वबुद्धविषयव्यूहमादर्शयति। आकाङ्क्षन् यावदनभिलाप्यान् सर्वाकारबुद्धविषयव्यूहाना-दर्शयति। आकाङ्क्षन् यावन्त्यनभिलाप्यासु लोकधातुषु परमाणुरजांसि तावत आत्मभावानेक-क्षणलवमुहूर्तेन निर्मिमीते। एकैकस्मिंश्च आत्मभावे तावत एव पाणीन् संदर्शयति। तैश्च पाणिभिर्दशसु दिक्षु बुद्धपूजायां प्रयुज्यते। एकैकेन च पाणिना गङ्गानदीवालिकासमान् पुष्पपुटांस्तेषां बुद्धानां भगवतां क्षिपति। यथा पुष्पाणामेवं गन्धानां माल्यानां विलेपनानां चूर्णानां चीवराणां छत्राणां ध्वजानां पताकानामेवं सर्वव्यूहानाम्। एकैकस्मिंश्च काये तावन्त्येव शिरांसि अधितिष्ठति। एकैकस्मिंश्च शिरसि तावतीरेव जिह्वा अधितिष्ठति। ताभिस्तेषां

बुद्धानां भगवतां वर्णं भाषते। चित्तोत्पादे च दशदिक्फरणं गच्छति। चित्तक्षणे चाप्रमाणा अभिसंबोधीर्यावन्महापरिनिर्वाणव्यूहानधितिष्ठति। अप्रमाणकायतां च त्र्यध्वतायामधितिष्ठति। स्वकाये चाप्रमाणानां बुद्धानां भगवतामप्रमेयान् बुद्धक्षेत्रगुणव्यूहानधितिष्ठति। सर्वलोकधातुसंवर्तविवर्तव्यूहांश्च स्वकायेऽधितिष्ठति। सर्वा वातमण्डलीश्चैकरोमकूपादुत्सृजति।
5 न च सत्त्वान् विहेठयति। आकाङ्क्षंश्चैकामप्स्कन्धपर्यन्तं लोकधातुमधितिष्ठति। तस्यां च महापद्ममधितिष्ठति। तस्य च महापद्मस्य प्रभावभासव्यूहेन अनन्ता लोकधातूः स्फरति। तत्र च महाबोधिवृक्षमादर्शयति। यावत्सर्वाकारवरोपेतं सर्वज्ञानत्वं संदर्शयति। स्वकाये दशदिग्मणिविद्युचन्द्रसूर्यप्रभा यावत्सर्वावभासप्रभा अधितिष्ठति। एकमुखवातेन चैकैकस्या दिशः प्रतिदिशमनन्ता लोकधातूः कम्पयति, न च सत्त्वानुत्त्रासयति। दशदिशं च
10 वातसंवर्तनीं तेजःसंवर्तनीमप्संवर्तनीमधितिष्ठति। सर्वसत्त्वांश्च आकाङ्क्षन् यथाभिप्रायं रूपाश्रयालंकृतानधितिष्ठति। स्वकाये च तथागतकायमधितिष्ठति। तथागतकाये च स्वकायमधितिष्ठति। तथागतकाये स्वबुद्धक्षेत्रमधितिष्ठति। स्वबुद्धक्षेत्रे च तथागतकायमधितिष्ठति। इति हि भो जिनपुत्र धर्ममेघायां बोधिसत्त्वभूमौ प्रतिष्ठितो बोधिसत्त्व इमानि चान्यानि चाप्रमेयासंख्येयानि ऋद्धिविकुर्वणकोटिनियुतशतसहस्राण्यादर्शयति॥

R 92 15 अथ खलु तस्याः पर्षदः केषांचिद्बोधिसत्त्वानां केषांचिद्देवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगशक्रब्रह्मलोकपालमहेश्वरशुद्धावासानामेतदभवत्—यदि तावद्बोधिसत्त्वस्यैवमप्रमाण ऋद्ध्यभिसंस्कारगोचरः, तथागतानां पुनः किंरूपो भविष्यतीति? अथ खलु विमुक्तिचन्द्रो बोधिसत्त्वस्तस्याः पर्षदश्चित्ताशयविचारमाज्ञाय वज्रगर्भं बोधिसत्त्वमेतदवोचत्—संशयिता बतेयं भो जिनपुत्र पर्षत्। साधु, अस्याः संशयच्छित्त्यर्थं किंचिन्मात्रं
20 बोधिसत्त्वव्यूहप्रातिहार्यं संदर्शय। अथ खलु वज्रगर्भो बोधिसत्त्वस्तस्यां वेलायां सर्वबुद्धक्षेत्रकायस्वभावसंदर्शनं नाम बोधिसत्त्वसमाधिं समापद्यते। समनन्तरसमापन्ने वज्रगर्भे बोधिसत्त्वे सर्वबुद्धक्षेत्रकायस्वभावसंदर्शनं बोधिसत्त्वसमाधिम्, अथ तावदेव सा सर्वावती बोधिसत्त्वपर्षत् सा च देवनागयक्षशुद्धावासपर्षद् वज्रगर्भस्य बोधिसत्त्वस्य कायान्तरीभूतमात्मानं संजानीते स्म, तत्र च बुद्धक्षेत्रमभिनिर्वृत्तं संजानीते स्म। तस्मिंश्च बुद्धक्षेत्रे ये
25 आकारव्यूहास्ते न सुकराः परिपूर्णयापि कल्पकोट्या प्रभावयितुम्। तत्र च बोधिवृक्षं दशत्रिसाहस्रशतसहस्रविष्कम्भस्कन्धं परिपूर्णत्रिसाहस्रकोटिविपुलाप्रमाणविटपोद्विद्धशिखरं तदनुरूपं च तस्मिन् बोधिमण्डे सिंहासनवैपुल्यं तत्र सर्वाभिज्ञामतिराजं नाम तथागतं बोधिमण्डवरगतं समपश्यत्। इति हि यावन्तस्तत्र व्यूहाः संदृश्यन्ते ते न सुकराः परिपूर्णयापि कल्पकोट्या प्रभावयितुम्। स इदं महाप्रातिहार्यं संदर्श्य तां सर्वावतीं बोधिसत्त्वपर्षदं
30 तां च देवनाग...शुद्धावासपर्षदं पुनरेव यथास्थाने स्थापयामास। अथ खलु सा सर्वावती पर्षदाश्चर्यप्राप्ता तूष्णींभूता तमेव वज्रगर्भं बोधिसत्त्वं निध्यायन्ती स्थिताभूत्। अथ खलु विमुक्तिचन्द्रो बोधिसत्त्वो वज्रगर्भं बोधिसत्त्वमेतदवोचत्—आश्चर्यमिदं भो जिन-

पुत्र, अद्भुतं यावदचिन्त्योपमस्य समाधेर्निमेषव्यूहप्रभावः । तत्को नामायं भो जिनपुत्र समाधिः ? वज्रगर्भो बोधिसत्त्व आह—सर्वबुद्धक्षेत्रकायस्वभावसंदर्शनो नामायं भो जिनपुत्र समाधिः । विमुक्तिचन्द्रो बोधिसत्त्व आह—कः पुनर्भो जिनपुत्र अस्य समाधेर्गोचर-विषयव्यूहः ? वज्रगर्भो बोधिसत्त्व आह—आकाङ्क्षन् भो जिनपुत्र बोधिसत्त्वोऽस्य समाधेः R 93 सुपरिभावितत्वाद्गङ्गानदीवालिकासमलोकधातुपरमाणुरजःसमानि दश बुद्धक्षेत्राणि स्वकाये 5 आदर्शयेत्, अतो वा भूय उत्तरि । ईदृशानां भो जिनपुत्र बोधिसत्त्वसमाधीनां धर्ममेघायां बोधिसत्त्वभूमौ स्थितो बोधिसत्त्वो बहूनि शतसहस्राणि प्रतिलभते । तेन तस्य बोधिसत्त्वस्य यावद् यौवराज्यप्राप्तैरपि बोधिसत्त्वैः साधुमतीबोधिसत्त्वभूमौ प्रतिष्ठितैर्न सुकरः कायः कायकर्म वा ज्ञातुम् । न सुकरा वाग्वाक्कर्म वा ज्ञातुम् । न सुकरं मनो मनस्कर्म वा ज्ञातुम् । न सुकरर्द्धिर्ज्ञातुम् । न सुकरं त्र्यध्वविलोकितं ज्ञातुम् । न सुकरः समाधिगोचरानुप्रवेशो 10 ज्ञातुम् । न सुकरो ज्ञानविषयो ज्ञातुम् । न सुकरं विमोक्षविक्रीडितं ज्ञातुम् । न सुकरं निर्माणकर्म वा अधिष्ठानकर्म वा प्रभावकर्म वा ज्ञातुम् । न सुकरं यावत्समासतः क्रमोत्क्षेपनिक्षेपकर्मापि ज्ञातुम् । यावत् यौवराज्य....। एवमप्रमाणा भो जिनपुत्र इयं धर्ममेघा बोधिसत्त्वभूमिः समासनिर्देशतः । विस्तरशः पुनरसंख्येयकल्पशतसहस्रनिर्देशा-पर्यन्ताकारतो द्रष्टव्या ॥ 15

विमुक्तिचन्द्रो बोधिसत्त्व आह—कीदृशो भो जिनपुत्र तथागतगोचरविषयप्रवेशो यत्रेदं बोधिसत्त्वानां चर्याविषयाधिष्ठानमेवमप्रमाणम् ? वज्रगर्भो बोधिसत्त्व आह—तद्यथापि नाम स्याद्भो जिनपुत्र कश्चिदेव पुरुषश्चतुर्द्वीपिकाया लोकधातोर्द्वौ त्रीन् वा कोलास्थिमात्रान् पाषाणान् गृहीत्वैवं वदेत्—कियती नु खलु सा पृथिवीधातुरपर्यन्तासु लोकधातुषु इतः पाषाणेभ्यो महद्गततया वा प्रमाणत्वेनेति ? ईदृशमिदं मम त्वद्वचनं प्रतिभाति । यस्त्वम-20 प्रमाणज्ञानिनां तथागतानामर्हतां सम्यक्संबुद्धानां धर्मतां बोधिसत्त्वधर्मतया तुलयसि । अपि तु खलु पुनर्भो जिनपुत्र यथा चातुर्द्वीपिकाया लोकधातोः परीत्ता पृथिवीधातुर्या उद्गृहीता-प्रमाणावशिष्टा, एवमेव भो जिनपुत्र अस्या एव तावद्धर्ममेघाया बोधिसत्त्वभूमेरप्रमेयान् कल्पान्निर्दिश्यमानायाः प्रदेशमात्रं निर्दिष्टं स्यात्, कः पुनर्वादस्तथागतभूमेः । आरोचयामि ते भो जिनपुत्र, प्रतिवेदयामि । अयं मे तथागतः पुरतः स्थितः साक्षीभूतः । सचेद्भो जिनपुत्र 25 दशसु दिक्षु एकैकस्यां दिशि अपर्यन्तलोकधातुपरमाणुरजःसमानि बुद्धक्षेत्राण्येवंभूमिप्राप्तै-र्बोधिसत्त्वैः पूर्णानि भवेयुर्यथेक्षुवनं वा नडवनं वा वेणुवनं वा तिलवनं वा शालिवनं वा, तेषामपर्यन्तकल्पाभिनिर्हृतो बोधिसत्त्वचर्याभिनिर्हारस्तथागतस्यैकक्षणज्ञानप्रसृतस्य तथागत- R 94 विषयस्य...। इति हि भो जिनपुत्र एवंज्ञानानुगतो बोधिसत्त्वस्तथागताद्वयकायवाक्चित्तो बोधिसत्त्वसमाधिबलं च नोत्सृजति बुद्धदर्शनपूजोपस्थानं च करोति । स एकैकस्मिन् 30 कल्पेऽपर्यन्तांस्तथागतान् सर्वाकाराभिनिर्हारपूजाभिः पूजयति । औदारिकानुगतया पूजया

---

१ See page 42.

तेषां च बुद्धानां भगवतामधिष्ठानावभासं संप्रतीच्छति। स भूयस्या मात्रया असंहार्यो भवति धर्मधातुविभक्तिपरिपृच्छानिर्देशैः। अनेकान् कल्पाननेकानि कल्पशतानि...अनेकानि कल्पकोटिनियुतशतसहस्राणि।[1] तद्यथापि नाम भो जिनपुत्र दिव्यकर्मारकृतं महाभरणोपचारं महामणिरत्नप्रत्युप्तं वशवर्तिनो देवराजस्योत्तमाङ्गे कण्ठे वा आबद्धमसंहार्यं भवति तदन्यै-
5 र्दिव्यमानुष्यकैराभरणविभूषणोपचारैः, एवमेव भो जिनपुत्र बोधिसत्त्वस्येमां दशमीं धर्ममेघां बोधिसत्त्वभूमिमनुप्राप्तस्य ते बोधिसत्त्वज्ञानोपचारा असंहार्या भवन्ति सर्वसत्त्वैः सर्वश्रावकप्रत्येकबुद्धैः प्रथमां बोधिसत्त्वभूमिमुपादाय यावन्नवमीं बोधिसत्त्वभूमिमनुप्राप्तैर्बोधिसत्त्वैः। अस्यां च बोधिसत्त्वभूमौ स्थितस्य बोधिसत्त्वस्य ज्ञानावभासः सत्त्वानां यावत्सर्वज्ञज्ञानावताराय संवर्ततेऽसंहार्यस्तदन्यैर्ज्ञानावभासैः। तद्यथापि नाम भो जिनपुत्र महेश्वरस्य देवराजस्याभा
10 अतिक्रान्ता भवति सर्वोपपत्त्यायतनानि, सत्त्वानां च कायाश्रयान् प्रह्लादयति, एवमेव भो जिनपुत्र बोधिसत्त्वस्य अस्यां दशम्यां धर्ममेघायां बोधिसत्त्वभूमौ स्थितस्य ज्ञानाभा असंहार्या भवति सर्वश्रावकप्रत्येकबुद्धैः प्रथमां बोधिसत्त्वभूमिमुपादाय यावन्नवमीबोधिसत्त्वभूमिप्रतिष्ठितैर्बोधिसत्त्वैर्यावत्सर्वज्ञज्ञानंधर्मतायां च सत्त्वान् प्रतिष्ठापयति। स खलु पुनर्भो जिनपुत्र बोधिसत्त्व एवंज्ञानानुगतो बुद्धैर्भगवद्भिस्त्र्यध्वज्ञानं च संश्राव्यते। धर्मधातुप्रभेदज्ञानं च
15 सर्वलोकधातुस्फरणं च सर्वलोकधात्ववभासाधिष्ठानं च सर्वसत्त्वक्षेत्रधर्मपरिज्ञानं च सर्वसत्त्वचित्तचरितानुप्रवेशज्ञानं च सर्वसत्त्वयथाकालपरिपाकज्ञानं च विनयानतिक्रमणं च सर्वधर्मप्रविचयविभक्तिज्ञानकौशल्यं च समासतो यावत्सर्वज्ञज्ञानाप्रमाणतां च संश्राव्यते। तस्य दशभ्यः पारमिताभ्यो ज्ञानपारमिता अतिरिक्ततमा भवति, न च परिशेषासु न समुदागच्छति यथाबलं यथाभजमानम्। इयं भो जिनपुत्र बोधिसत्त्वस्य धर्ममेघा नाम दशमी बोधिसत्त्वभूमिः R 95
20 समासनिर्देशतः। विस्तरशः पुनरसंख्येयापर्यन्तकल्पनिर्देशनिष्ठातोऽनुगन्तव्या। यस्यां प्रतिष्ठितो बोधिसत्त्वो भूयस्त्वेन महेश्वरो भवति देवराजः कृती प्रभुः सत्त्वानां सर्वश्रावकप्रत्येकबुद्धबोधिसत्त्वपारमितोपदेशेष्वसंहार्यो धर्मधातुविभक्तिपरिपृच्छानिर्देशैः। यच्च किंचित्....॥

धर्ममेघा नाम बोधिसत्त्वभूमिर्दशमी॥



---

[1] See page 14 and change °शतं into °दशबुद्धक्षेत्रानभिलाप्यकोटीनयुतशतसहस्रपरमाणुरजःसम.

## ११ परीन्दनापरिवर्तः ।

इमास्ताः खलु पुनर्भो जिनपुत्रा दश बोधिसत्त्वभूमयः समासनिर्देशतो निर्दिष्टाः । विस्तरशः पुनरपर्यन्तकल्पनिर्देशनिष्ठातोऽनुगतव्याः । या अतीतानागतप्रत्युत्पन्नैर्बुद्धैर्भगवद्भिर्भाषिताश्च भाषिष्यन्ते च भाष्यन्ते च, ताः खलु पुनर्भो जिनपुत्र, एता दश बोधिसत्त्वभूमयः सर्वाकारसर्वज्ञज्ञानानुगता द्रष्टव्या अनुपूर्वाभिमुखत्वात् । तद्यथापि नाम 5 भो जिनपुत्र अनवतप्तह्रदप्रभवं प्रवहद्वारि चतुर्भिर्महानदीस्रोतोमुखैर्जम्बूद्वीपं संतर्प्य अक्षयं भूयो विवृद्धमप्रमेयाणां सत्त्वानामुपकारीभूतं यावन्महासमुद्रमर्पयति, तच्च वारि आदित एव महासागराभिमुखम्, एवमेव भो जिनपुत्र बोधिचित्तमहाह्रदप्रभवं प्रवहत् कुशलमूलवारि महाप्रणिधाननदीस्रोतोमुखैश्चतुर्भिः संग्रहवस्तुभिः सर्वसत्त्वधातुं संतर्प्य अक्षयं भूय उत्तरि विवृद्धम् अप्रमेयाणां सत्त्वानामुपकारीभूतं यावत्सर्वाकारसर्वज्ञज्ञानमहासमुद्रमर्पयति । तच्च 10 कुशलमूलवारि आदित एव सर्वज्ञतामहासागराभिमुखम् ॥

ताः खलु भो जिनपुत्र एता दश भूमयो बुद्धज्ञानं प्रतीत्य प्रज्ञायन्ते । तद्यथापि नाम भो जिनपुत्र महापृथिवीं प्रतीत्य दश महारत्नपर्वतराजाः प्रज्ञायन्ते । तद्यथा हिमवान्[1] पर्वतराजो गन्धमादनो वैदल्य ऋषिगिरिर्युगंधरोऽश्वकर्णगिरिर्निमिंधरश्चक्रवालः केतुमान् सुमेरुश्च महापर्वतराजः । तत्र भो जिनपुत्र तद्यथापि नाम हिमवान् पर्वतराज आकरः 15 सर्वभैषज्यजातीनामपर्यन्तः सर्वभैषज्यजातिग्रहणतया, एवमेव भो जिनपुत्र प्रमुदितायां बोधिसत्त्वभूमौ स्थितो बोधिसत्त्व आकरो भवति सर्वलौकिककाव्यशास्त्रमन्त्रविद्यास्थानानामपर्यन्तः सर्वलौकिककाव्यशास्त्रमन्त्रविद्योपायेन । तद्यथापि नाम भो जिनपुत्र गन्धमादनो महापर्वतराज आकरः सर्वगन्धजातीनामपर्यन्तः सर्वगन्धजातिग्रहणेन, एवमेव भो जिनपुत्र विमलायां बोधिसत्त्वभूमौ स्थितो बोधिसत्त्व आकरो भवति सर्वबोधिसत्त्वशीलसंवरचारित्र- 20 गन्धानामपर्यन्तः सर्वबोधिसत्त्वशीलसंवरचारित्रगन्धसंग्रहणेन । तद्यथापि नाम भो जिनपुत्र वैदल्यो महापर्वतराजः शुद्धो रत्नमय आकरः सर्वरत्नजातीनामपर्यन्तः सर्वलौकिकरत्नजातिग्रहणेन, एवमेव भो जिनपुत्र प्रभाकर्यां बुद्धभूमौ सर्वलौकिकध्यानाभिज्ञाविमोक्षसमाधिसमापत्तीनाम्, अपर्यन्तः सर्वलौकिकध्यानाभिज्ञाविमोक्षसमाधिसमापत्तीनाम्, अपर्यन्तः सर्वलौकिकध्यानाभिज्ञाविमोक्षसमाधिसमापत्तिपरिपृच्छानिर्देशैः । तद्यथापि नाम 25 भो जिनपुत्र ऋषिगिरिर्महापर्वतराजः पञ्चाभिज्ञानामृषीणामपर्यन्तः पञ्चाभिज्ञर्षिगणनया, एवमेव भो जिनपुत्र अर्चिष्मत्यां बुद्धभूमौ सर्वमार्गामार्गान्तरावतारनिर्देशविशेषज्ञानानामपर्यन्तः सर्वमार्गामार्गान्तरविशेषज्ञानपरिपृच्छानिर्देशैः । तद्यथापि नाम भो जिनपुत्र युगंधरो महापर्वतराजः सर्वयक्षमहर्द्धिकानामपर्यन्तः सर्वयक्षमहर्द्धिकगणनया, एवमेव भो जिनपुत्र सुदुर्जयायां बुद्धभूमौ सर्वाभिज्ञर्द्धिविकुर्वणप्रातिहार्याणामपर्यन्तः सर्वाभिज्ञर्द्धिविकु- 30 र्वणप्रातिहार्यपरिपृच्छानिर्देशैः । तद्यथापि नाम भो जिनपुत्र अश्वकर्णगिरिर्महापर्वतराजः सर्वफलजातीनामपर्यन्तः सर्वफलजातिग्रहणेन, एवमेव भो जिनपुत्र अभिमुख्यां बुद्धभूमौ

R 96

[1] Japanese translators read वैपुल्य and खादिर for हिमवान्.

प्रतीत्यसमुत्पादावतारनिर्देशानामपर्यन्तः श्रावकफलाभिसमयपरिपृच्छानिर्देशैः। तद्यथापि नाम भो जिनपुत्र निमिंधरो नाम महापर्वतराजः सर्वनागमहर्द्धिकानामपर्यन्तः सर्वनागमहर्द्धिगणनया, एवमेव भो जिनपुत्र दूरंगमायां बुद्धभूमौ उपायप्रज्ञानिर्देशानामपर्यन्तः प्रत्येकबुद्धफलाभिसमयपरिपृच्छानिर्देशैः। तद्यथापि नाम भो जिनपुत्र चक्रवालो 5 नाम महापर्वतराजः वशीभूतानामपर्यन्तो वशीभूतगणनया, एवमेव भो जिनपुत्र अचलायां बुद्धभूमौ सर्वबोधिसत्त्ववशिताभिनिर्हाराणामपर्यन्तो लोकधातुविभक्तिपरिपृच्छानिर्देशैः। तद्यथापि भो जिनपुत्र केतुमान् नाम महापर्वतराजः असुरमहर्द्धिकानामपर्यन्तोऽसुरमहर्द्धिकगणनया, एवमेव भो जिनपुत्र साधुमत्यां बुद्धभूमौ सर्वसत्त्वप्रवृत्तिनिवृत्तिज्ञानोपचाराणामपर्यन्तः सर्वजगत्संभवविभवपरिपृच्छानिर्देशैः। तद्यथापि भो जिनपुत्र 10 सुमेरुर्महापर्वतराजः सर्वदेवमहर्द्धिकानामपर्यन्तः सर्वदेवमहर्द्धिकगणनया, एवमेव भो जिनपुत्र धर्ममेघायां बुद्धभूमौ तथागतबलवैशारद्यावेणिकबुद्धधर्माणामपर्यन्तो बुद्धकायसंदर्शनपरिपृच्छानिर्देशैः। यथा खलु पुनरिमे भो जिनपुत्र दश महारत्नपर्वता महासमुद्रसंभूता महासमुद्रप्रभाविताः, एवमेव भो जिनपुत्र इमा अपि दश भूमयः सर्वज्ञतासंभूताः सर्वज्ञताप्रभाविताः॥

R 97

15 तद्यथापि भो जिनपुत्र महासमुद्रो दशभिराकारैः संख्यां गच्छत्यसंहार्यतया। कतमैर्दशभिः? यदुत अनुपूर्वनिम्नतश्च मृतकुणपासंवासतश्च अन्यवारिसंख्यात्यजनतश्च एकरसतश्च बहुरत्नतश्च गम्भीरदुरवगाहतश्च विपुलाप्रमाणतश्च महाभूतावासतश्च स्थितवेलानतिक्रमणतश्च सर्वमेघवारिसंप्रत्येषणातृप्तितश्च, एवमेव भो जिनपुत्र बोधिसत्त्वचर्या दशभिराकारैः संख्यां गच्छत्यसंहार्यतया। कतमैर्दशभिः? यदुत प्रमुदितायां बोधिसत्त्वभूमौ अनुपूर्व- 20 महाप्रणिधानाभिनिर्हारनिम्नतः। विमलायां बोधिसत्त्वभूमौ दौःशील्यमृतकुणपासंवासतः। प्रभाकर्यां बोधिसत्त्वभूमौ लौकिकप्रज्ञप्तिसंख्यात्यागतः। अर्चिष्मत्यां बोधिसत्त्वभूमौ बुद्धभेद्यप्रसादैकरसतः। सुदुर्जयायां बोधिसत्त्वभूमौ अप्रमाणोपायाभिज्ञालोकक्रियाभिनिर्हारबहुरत्नतः। अभिमुख्यां बोधिसत्त्वभूमौ प्रतीत्यसमुत्पादप्रत्यवेक्षणदुरवगाहगाम्भीर्यतः। दूरंगमायां बोधिसत्त्वभूमौ बुद्धिप्रविचयकौशल्यविपुलाप्रमाणतः। अचलायां 25 बोधिसत्त्वभूमौ महाव्यूहाभिनिर्हारसंदर्शनमहाभूतावासतः। साधुमत्यां बोधिसत्त्वभूमौ गम्भीरविमोक्षजगच्चरितयथावत्प्रतिवेधस्थितवेलानतिक्रमणतः। धर्ममेघायां बोधिसत्त्वभूमौ सर्वतथागतधर्मावभासमहामेघवारिसंप्रत्येषणातृप्तितः॥

तद्यथापि भो जिनपुत्र महामणिरत्नं यदा दश रत्नगोत्राण्यतिक्रम्य अभ्युत्क्षिप्तं च भवति कुशलकर्मारसुपरितापितं च सुपरिपिण्डितं च सुपरिशोधितं च सुपर्यवदापितं च 30 सुनिर्विद्धं च रत्नसूत्रखाविद्धं च उच्चवैडूर्यमणिरत्नदण्डध्वजाग्रावरोपितं च सर्वावभासप्रमुक्तं च राजानुज्ञातं च भवति, तदा सर्वसत्त्वानां सर्वरत्नसंग्रहाय प्रत्युपस्थितं भवति, एवमेव भो जिनपुत्र यदा बोधिसत्त्वानां सर्वज्ञतारत्नचित्तोत्पादो दशार्यरत्नगोत्राण्यतिक्रम्योत्पन्नो भवति

R 98

धूतगुणसंलेखशीलव्रततपःसुपरितापितश्च ध्यानसमाधिसमापत्तिसुपरिपिण्डितश्च मार्गाङ्गाकार-
सुपरिशोधितश्च उपायाभिज्ञासुपर्यवदापितश्च प्रतीत्यसमुत्पादसुनिर्विद्धश्च उपायप्रज्ञाविचित्र-
रत्नसूत्रस्वाविद्धश्च वशिताममहावैडूर्यमणिरत्नदण्डध्वजाग्रावरोपितश्च सत्त्वचरितप्रत्यवेक्षण-
श्रुतज्ञानावभाससंप्रयुक्तश्च तथागतधर्मराजसम्यक्संबुद्धज्ञानाभिषेकानुगतश्च भवति, तदा
सर्वसत्त्वानां सर्वबुद्धकार्यरत्नसंग्रहाय प्रत्युपस्थितो भवति, तदा च सर्वज्ञ इत्याख्यायते ॥ अयं 5
खलु पुनर्भो जिनपुत्र बोधिसत्त्वचर्यासमुदानयनः सर्वाकारसर्वज्ञज्ञानगुणसंचयो धर्ममुख-
परिवर्तो नानवरोपितकुशलमूलानां सत्त्वानां श्रवणावभासमागमिष्यति ॥

विमुक्तिचन्द्रो बोधिसत्त्व आह—येषां पुनर्भो जिनपुत्र अयं सर्वाकारसर्वज्ञज्ञानगुणसंचयो
धर्ममुखपरिवर्तः श्रवणावभासमागमिष्यति, ते कियता पुण्योपचयेन समन्वागता भविष्यन्ति ?
वज्रगर्भो बोधिसत्त्व आह—यावान् भो जिनपुत्र सर्वज्ञज्ञानस्य प्रभावस्तावान् सर्वज्ञताचित्तो- 10
त्पादसंग्रहालम्बनात्पुण्योपचयः स्यात् । यावान् सर्वज्ञताचित्तोत्पादसंग्रहालम्बनतः पुण्यो-
पचयस्तावानेवास्य धर्ममुखपरिवर्तस्याभिमुखः पुण्योपचयोऽनुगन्तव्यः । तत्कस्य हेतोः ? न
हि भो जिनपुत्र शक्यं अन्यत्र बोधिसत्त्वेन अयं सर्वाकारसर्वज्ञज्ञानगुणसंचयो धर्ममुख-
परिवर्तः श्रोतुं वा अधिमोक्तुं वा प्रत्येतुं वा उद्ग्रहीतुं वा धारयितुं वा संधारयितुं वा । कः
पुनर्वादो भावनाकारप्रयोगोद्योगनिष्पादनेषु ? तस्मात्तर्हि भो जिनपुत्र सर्वज्ञज्ञानमुखानु- 15
गतास्ते संधारयितव्याः, ये इमं सर्वज्ञज्ञानगुणसंचयधर्ममुखपरिवर्तं श्रोष्यन्ति, श्रुत्वा
चाधिमोक्ष्यन्ते, अधिमुच्य चाधारयिष्यन्ति, भावनाकारेण प्रयोक्ष्यन्ते ॥

अथ खलु तस्यां वेलायां बुद्धानुभावेन धर्मताप्रतिलम्भेन च दशदिग्लोकदशबुद्धक्षेत्र-
कोटिपरमाणुरजःसमा लोकधातवः षड्विकारमष्टादशमहानिमित्तमकम्पन्त प्राकम्पन्त संप्रा-
कम्पन्त । अचलन् प्राचलन् संप्राचलन् । अवेधन्त प्रावेधन्त संप्रावेधन्त । अरणन् प्रारणन् 20
संप्रारणन् । अक्षुभ्यन् प्राक्षुभ्यन् संप्राक्षुभ्यन् । अगर्जन् प्रागर्जन् संप्रागर्जन् । दिव्याश्च
पुष्पगन्धमाल्यमेघा अभिप्रावर्षन् । दिव्याश्च वस्त्रमेघा दिव्याश्चूर्णमेघा दिव्या रत्नमेघा दिव्या R 99
आभरणमेघा दिव्या छत्रमेघा दिव्या ध्वजमेघा दिव्या पताकामेघा अभिप्रावर्षन् । दिव्यं
च सूर्यचक्रात्मभावमण्डलमणिराजसुमेरुमेघवर्षमभिप्रावर्षन् । दिव्यं च सर्वरुतरवितवाद्यमणि-
राजसुमेरुमेघवर्षमभिप्रावर्षन् । दिव्यं च जाम्बूनदकनकवर्णप्रभामण्डलमणिराजसुमेरुमेघ- 25
वर्षमभिप्रावर्षन् । दिव्याश्च तूर्यतालावचरसंगीतिमेघा नदन्ति स्म । दिव्यसमतिक्रान्ताः
सर्वज्ञताभूम्यभिष्टवसंगीतिमेघा नदन्ति स्म । यथा चास्यां लोकधातौ चातुर्द्वीपिकायां
परनिर्मितवशवर्तिनो देवराजस्य विमाने मणिरत्नगर्भप्रासादे, तथा सर्वलोकधातुषु दश दिशः
स्फरित्वा इयमेव धर्मदेशना सर्वत्रैव प्रवर्तते स्म । ...दशभ्यो दिग्भ्यो दशबुद्धक्षेत्रकोटि-
परमाणुरजःसमानां लोकधातूनां परेण दशबुद्धक्षेत्रकोटिपरमाणुरजःसमा बोधिसत्त्वा 30
आगच्छन्ति दशदिशं स्फरन्तः । ते च आगत्यैवमाहुः—साधु साधु भो जिनपुत्र, यस्त्वमिमां
बोधिसत्त्वभूमिधर्मतां सूचयसि । वयमपि भो जिनपुत्र सर्वे वज्रगर्भसमनामका एव वज्रश्री-

नामिकाभ्यो नानालोकधातुभ्य इहागता वज्रध्वजनामकानां तथागतानामन्तिकेभ्यः। सर्वासु च तासु लोकधातुषु इयमेव धर्मदेशना प्रवर्तते बुद्धानुभावेन एवंरूपास्वेव पर्षत्सु। एभिरेव पदैरेभिरेव व्यञ्जनैरेभिरेव निरुक्तैरेतमेवार्थमभिलषद्भिरनूनमनधिकमनतिरिक्तम्, ते वयं भो जिनपुत्र साक्षीभूता बुद्धानुभावेनेमां पर्षदं संप्राप्ताः। यथा च भो
5 जिनपुत्र वयमिमां लोकधातुं संप्राप्तास्तथा च दशसु दिक्षु सर्वलोकधातुष्वेकैकस्यां लोकधातौ चातुर्द्वीपिकायां परनिर्मितवशवर्तिभवने वशवर्तिनो देवराजस्य विमाने मणिरत्नगर्भप्रासादे संप्राप्ता इति ॥

इदमवोचद्वज्रगर्भो बोधिसत्त्वो महासत्त्वोऽभ्यनुज्ञातस्तथागतेन। आत्तमनाः सा च सर्वावती बोधिसत्त्वपर्षत् सा च देवनाग....शुद्धावासपर्षद् भगवांश्च परनिर्मितवशवर्तिषु
10 देवेषु विहरन्नचिराभिसंबुद्धो द्वितीये सप्ताहे वशवर्तिनो देवराजस्य विमाने मणिरत्नगर्भे वज्रगर्भस्य बोधिसत्त्वस्य भाषितमभ्यनन्दन्निति ॥

इति परीन्दनापरिवर्तो नामैकादशः ॥

इति श्रीबोधिसत्त्वचर्याप्रस्थानो दशभूमीश्वरो नाम महायानसूत्ररत्नराजः समाप्तः ॥



---

१ See page 61.

# दशभूमिकसूत्रे गाथाविभागः।[1]

## १ प्रमुदिता नाम प्रथमा भूमिः।

### उपक्रमः।

ते शुक्लधर्मुपचिताः कुशलोपपेताः
पर्युपासिताः सुगतमैत्रकृपानुकूलाः। 5
अधिमुक्त्युदार कुशलाशय शुद्धभावा-
श्चित्तं जनेन्ति अतुलं जिनज्ञानहेतोः ॥ १ ॥
सर्वज्ञबुद्धबलशोधनवीर्यस्थामा
जिनधर्मनिष्पत्तिजगत्परित्रायणार्थाः।
महाकृपोपचयवर्तनधर्मचक्रं 10
जिनक्षेत्रशोधमुपपद्यति चित्तश्रेष्ठम् ॥ २ ॥
त्र्यध्वैकवीक्षणविबुद्धननिर्विकल्पा
नानाविधे जगति कालविशोधनार्थम्।
संक्षेपसर्वगुण एषितु नायकानाम्
आकाशतुल्य समुदेति उदारचित्तम् ॥ ३ ॥ 15
प्रज्ञाधिपत्य कृपपूर्वमुपाययुक्तम्
अधिमुक्ति-आशय-विशुद्ध-बलाप्रमाणम्।
आसङ्गताभिमुखता-अपरप्रणेयं
समतोपपेत-सुगतं वरचित्तजातम् ॥ ४ ॥
सहजातिचित्तरतनं सुगतात्मजानाम् 20
अतिक्रान्त बालचरि बुद्धचरि ह्युपेतः।
जातः कुले दशबलान अनोद्यपद्यः[2]
समतां जिने अनुगतो नियताग्रबोधिः ॥ ५ ॥

---

१ The DBh consists of two sections, one in prose, edited by Dr. Johannes Rahder in Roman script and published in Paris in 1926; and the second in prose edited by Dr J. Rahder and S. Susa, and published in Eastern Buddhist, Vols. V and VI, 1929–31. These gāthās are divided into two gronps, one initial and the other final. This arrangement seems to be similar to the same of the other Buddhist sūtras, introducing as well as summarizing the subject-matter treated. It should be noted, however, that initial or introductory stanzas are not usual in these sūtras though the concl uding ones are, and hence I am inclined to believe that the gāthā-portion of the *Daśabhūsmikasūtra* is a positively late addition. Perhaps the other one also is equally late. २ Better अनोपवद्यः.

एकस्मि चित्त उपपद्यति भूमिलाभो
भवते अचल्यु गिरिराजसमाशयश्च।
प्रामोद्यप्रीतिबहुलश्च प्रसादवांश्च
उत्साहवेगविपुलः सदुदग्रचित्तः॥ ६॥

5 संरम्भहिंसविगतश्च अक्रोधनश्च
ह्रीगौरवार्जवतरश्च सुसंवृतश्च।
जगतायनं स्मरति अप्रतिमानज्ञानं
प्रीतिं जनेत्युपगतस्पृहमेत स्थानम्॥ ७॥

पञ्चा भया अपगताः सहभूमिलाभो
10 आजीविका मरण कीर्त्यथ दुर्गतिश्च।
पर्षद्भयं च विगतं तथ छम्भितत्वं
किं कारणं तथ हि आत्मनिकेतु नास्ति॥ ८॥

ते छम्भितत्वविगताः कृपमैत्रयुक्ताः
श्रद्धासगौरवह्रियोपगता गुणाढ्याः।
15 रात्रिंदिवं कुशलपक्ष निषेवमाणाः
सत्यार्थ धर्मनिरता न तु कामभोगैः॥ ९॥

श्रुतधर्मचिन्तकुशला अनिकेतचित्ता
लाभादशीचित्तगता उत बोधिचित्ताः।
ज्ञानाभिलाषि बलशोधनबुद्धधर्मा
20 एषन्ति पारमित वर्जितमायशाठ्याः॥ १०॥

यथवादिनस्तथक्रियाः स्थितसत्यवाक्या
न तु दूषणा जिनकुले चरि बोधिशिक्षाम्।
लोकक्रियाय विगता निरता जगार्थं
शुक्लैरतृप्त भुमयोत्तरिमारभन्ते॥ ११॥

25 ते एव धर्मनिरता गुणअर्थयुक्ता
अभिनिर्हरन्ति प्रणिधिं जिनदर्शनाय।
सद्धर्मधारण उपसंक्रमणा ऋषीणाम्
अभिनिर्हरन्ति प्रणिधिं वरचारिकायाम्॥ १२॥

परिपाकसत्त्वपरिशोधनबुद्धक्षेत्रं
30 ते चास्य क्षेत्र स्फुटिका जिनऔरसेहि।
एकाशया जिनसुतेहि अमोघतायाः
सर्वत्र बालपथि बुद्धिय हेतुमर्थे॥ १३॥

एतांश्च नैकप्रणिधीनभिनिर्हरन्ति
ते चो अनन्तविपुलाय अनन्ततायै ।
आकाशधातुसत्त्वधर्मतनिर्वृतं च
लोको ह्यनिष्ठ जिनमुत्पदि ज्ञानभूमी ॥ १४ ॥

चित्तस्य नो विषयज्ञानप्रवेशनिष्ठा  5
या वर्तनि त्रिविधनिष्ठ जगत्यनन्ता ।
प्रणिधाननिष्ठितु भवेन्न ममैवरूपा
यथ एत निष्ठ तथ चर्य समा लभेयम् ॥ १५ ॥

एवं सुनिर्ह्वतसुमार्दवस्निग्धचित्ताः
श्रद्धेत बुद्धगुण सत्त्व विलोकयन्तः ।  10
प्रीत्यान्तुलम्भुपगतः कृपमैत्रतां च
परितायितव्य मय सत्त्व दुखार्दितानि ॥ १६ ॥

तेषार्थि त्याग विविधं पुन आरभन्ते
राज्यं वरं विविधरत्नहयान् गजांश्च ।
शिरहस्तपादनयना स्वकमात्ममांसं  15
सर्वं त्यजन्ति न च दीनमना भवन्ति ॥ १७ ॥

एषन्ति शास्त्र विविधान्न च खेदमेन्ति
शास्त्रज्ञ लोकचरितान्यनुवर्तयन्ति ।
लोकज्ञतामुपगता ह्रियता धृतिं च
पूज्यन्ति चाप्रतिसमान् गुरुगौरवेण ॥ १८ ॥  20

एषाभियुक्तविदुना दिवरात्रि नित्यम्
उत्तप्यते कुशल स्वर्ण यथैव अग्नौ ।
सो चापि एव परिकर्म दशान भूमी
कृत्वा असङ्गतमुपेति अविष्ठिहन्ता ॥ १९ ॥

यथ सार्थवाह महसार्थहिताय युक्तो  25
पुच्छित्व मार्गगुण क्षेमतमभ्युपेति ।
एमेव भूमि प्रथमा स्थित बोधिसत्त्वः
कृतनिष्क्रमो दशभिबोधिमुपेत्यसङ्गः ॥ २० ॥

अत्र स्थिता गुणधरा नृपती भवन्ति
धर्मानुशासक अहिंसक मैत्रयुक्ताः ।  30

जम्बुध्वजं सकलराज्य प्रशासयन्तः
स्थापेन्ति त्यागि जनतां वरबुद्धज्ञाने ॥ २१ ॥

आकाङ्क्षमाण वृषभा विजहित्व राज्यं
जिनशासने उपगताश्चरि आरभन्तः ।
लब्ध्वा समाधिशत बुद्धशतं च पश्यि
कम्पेन्ति क्षेत्रशतु भासि अतिक्रमन्ति ॥ २२ ॥

शोध्यन्ति सत्त्वशत धर्ममुखान् विशन्ति
प्रविशन्ति कल्पशतकायशतं निदर्शी ।
पूर्णं शतं जिनसुतान निदर्शयन्ति
भूयोत्तरि प्रणिधिश्रेष्ठबलाप्रमाणाः ॥ २३ ॥

इत्येषा प्रथमा भूमिर्निर्दिष्टा सुगतात्मजाः ।
सर्वलोकहितैषीणां बोधिसत्त्वानुत्तमा ॥ २४ ॥

## २ विमला नाम द्वितीया भूमिः ।

### उपक्रमगाथाः ।

श्रुत्वैतदुत्तमं स्थानं भूम्याः श्रेष्ठं मनोरमम् ।
प्रसन्नमनसंकल्पहर्षिताः सुगतात्मजाः ॥ १ ॥
अभ्युत्थिता आसनेभ्य अभ्युद्गम्य खगपथे । 5
अभ्योकिरन्ति कुसुमैः साध्विति व्याहरी गिरा ॥ २ ॥

साधु साधु महाप्राज्ञ वज्रगर्भ विशारद ।
यन्निर्दिष्टा त्वया भूमि बोधिसत्त्वान या चरी ॥ ३ ॥

पर्षद्धि विप्रसन्ना तु विमुक्तिचन्द्रः पृच्छति ।
उत्तरिं कीर्तिया भूमिं द्वितीयां सुगतात्मजाः ॥ ४ ॥ 10

कीदृशा मनसंकल्पा द्वितीयामभिलक्षतः ।
प्रव्याहर महाप्राज्ञ श्रोतुकामा जिनात्मजाः ॥ ५ ॥

### उपसंहारगाथाः ।

ते मार्दवार्जवमृदूकर्मणीयचित्ताः
कल्याणआशय दमाशयताभ्युपेताः । 15
संसर्गपेक्षविगताश्च उदारबुद्धि
माहात्म्य आशयविद् द्वितीयाक्रमन्ति ॥ ६ ॥

अत्र स्थिता गुणधराः कुशलोपपेताः
प्राणातिपातविगता अविहिंसचित्ताः ।
अदत्तदानपगताः परदारतां च 20
सत्यान्विता अपिशुनाः पुरुषप्रधानाः[1] ॥ ७ ॥

परभोगभिद्यविगता विदु मैत्रचित्ताः
सम्यक्पथे उपगता अशठज्ञकाश्च ।
निर्माणकायग्रहणाश्च सुपेशलाश्च
रक्षन्ति शास्तुशरणं सद अप्रमत्ताः ॥ ८ ॥ 25

दुःखानि यानि निरये तथ तिर्यग्योनौ
यमशासने ज्वलितआश्रयनित्युपेताः ।
सर्वे ति पापपतिताक्षलाः प्रभोन्ति
हन्ता विवर्जिय उपेमहि सत्यधर्मम् ॥ ९ ॥

---

१ Mss. °प्रहाणाः, °प्रहीणाः.

आदौ च कृत्व मनुजानुपपत्तिमिष्टां
यावद्भवाग्रमरणाशयध्यानु शिक्षाम्।
प्रत्येकयानमथ श्रावकबुद्धयानं
सर्वे इतो दशभि शुक्लपथैः प्रभूतम्॥ १०॥

एवं विदित्व सततं विदु अप्रमत्ताः
शीलेषु संस्थित परानपि स्थापयन्ति।
भूयोत्तरे करुणआशयताभ्युपेताः
सत्त्वान् विदित्व दुखितान् कृप संजनेन्ति॥ ११॥

हन्तो विदृष्टिपतिता इमि बालबुद्धी
क्रोधोपनाहद्रुतचित्त विवादप्राप्ताः।
सततं अतृप्त विषये मुयु प्रार्थयन्ति
त्रिनिदान सत्त्व परिमोचयितव्य एते॥ १२॥

महअन्धकारतमसावृत मोहछन्नाः
कान्तारमार्गपतिता महदृष्टिजाले।
संसारपञ्जरगता रिपु धर्षयन्ति
मोक्षाम्यहं नमुचिपञ्जरमध्यप्राप्तान्॥ १३॥

क्लेशोर्मिभिह्रियत ओघचतुर्निमग्ना
त्रैधातुके दुखशतैः परिपीड्यमानाः।
स्कन्धालयाभ्युपगता वृतआत्मसंज्ञा
तेषार्थि युज्यमि अहं दुखमोचनार्थम्॥ १४॥

अवसृज्य श्रेष्ठप्रवरं इम बुद्धज्ञानं
सति एव निःसरणि हीनमतिं जनेन्ति।
स्थापेमि तान् विमलज्ञानि तथागतानां
वीर्यारभन्ति अतुलं विदु बोधिहेतोः॥ १५॥

अत्र स्थिता गुणशतोपचिता महर्षि
पश्यन्ति नैकसुगतानपि पूजयन्ति।
तेषां शुभं मुयु उत्तप्यति कल्पकोट्यां
कासीसकाञ्चनवरं च यथा निक्षिप्तम्॥ १६॥

अत्र स्थिता जिनसुता नृपचक्रवर्ति
भूत्वा प्रणेन्ति दशभिः कुशलेभि सत्त्वान्।

यच्चैव संचि शुभसंचय संचिनन्ति
त्राता भवेम जगतो दशभिर्बलाढ्यैः ॥ १७ ॥

आकाङ्क्षमाण विजहित्व च राजभोगान्
प्रव्रज्य शासनवरे उपगम्य धीराः ।
वीर्यान्विता लभिय श्रेष्ठवरं समाधिं
बुद्धा सहस्र परिपूर्ण क्षणे दशन्ति ॥ १८ ॥ 5

एवंविधा गणनया भुयु अन्य नेका
आदर्शयन्ति वृषभी स्थित अत्र भूमौ ।
अत उत्तरि प्रणिधिज्ञानवराभ्युपेता
नैका विकुर्वितविधौ विनयन्ति सत्त्वान् ॥ १९ ॥ 10

इत्येषा द्वितिया भूमिर्निर्दिष्टा सुगतात्मजाः ।
सर्वलोकहितैषीणां बोधिसत्त्वानुत्तमा ॥ २० ॥



## ३ प्रभाकरी नाम तृतीया भूमिः ।

### उपक्रमगाथाः ।

एवं श्रुणित्व चरिभूमिमुत्तमां
 बोधिसत्त्वविषये अचिन्तियाम् ।
हर्षिता जिनसुताः सगौरवाः
 पुष्पमेघ नभतः प्रमुञ्चिषुः ॥ १ ॥

साधु साधु गिरिसारसाकया (?)
 देशितो विदुन शीलसंवरः ।
सर्वसत्त्वकरुणाय आशयो
 भूमिश्रेष्ठ द्वितियाय गोचरः ॥ २ ॥

भूततत्त्व वितथामनन्यथा
 बोधिसत्त्वचरणं मनोरमम् ।
सर्वलोकहितसौख्यचिन्तना
 देशितं तु परमप्रभास्वरम् ॥ ३ ॥

भूयु भूयु नरदेवपूजितां
 भूमिश्रेष्ठ तृतियामुदाहर ।
धर्मज्ञानक्रियमुक्ति सूचय
 यादृशोऽनुभव तादृ(शो) गोचरः ॥ ४ ॥

दानशीलचरणं महर्षिणां
 क्षान्तिवीर्यशमप्रज्ञुपायताम् ।
मैत्रश्रेष्ठ करुणाय मार्गणं
 भाषध्वं जिनचरीविशोधनम् ॥ ५ ॥

विमुक्तिचन्द्र उवाच वज्रगर्भविशारदम् ।
तृतीया संक्रमन्तानामाशयं भण सूरण ॥ ६ ॥

### उपसंहारगाथाः ।

ते शुद्धआशय गुणाकर तीक्ष्णचित्ता
 निर्विण्ण रागविगता अनिवर्तियाश्च ।
दृढचित्त तप्तधृतियुक्ति उदारवेगा
 माहात्म्यताशयविदू तृतियाक्रमन्ति ॥ ७ ॥

अत्र स्थिता विदु प्रभाकरिभूमिदेशे
 दुःखं अनित्यमशुचिं च प्रलोपधर्मम् ।
अचिरस्थिताक क्षणिकं च निरोधकं च
 विचिनन्ति संस्कृतगतीकमनागतीकम् ॥ ८ ॥

ते रोगभूतसहशोकपरदेवनं च
सोपायसं च प्रिय अप्रियतानुबद्धम् ।
दुःखदौर्मनस्यनिलयं ज्वलिताग्निकल्पं
पश्यन्ति संस्कृतमनन्त समुज्ज्वलन्ति ॥ ९ ॥
उद्विग्न सर्वे त्रिभवे अनपेक्षचित्ता 5
ज्ञानाभिलाष सुगतानमनन्यबुद्धिः ।
अविचिन्तियं अतुलियं असमन्तपारं
संपश्यते निरुपताप जिनान ज्ञानम् ॥ १० ॥
ते बुद्धज्ञान निरुपद्रवमीक्षमाणा
अत्राण नाथरहिता व्रजते चरन्ति । 10
नित्यं दरिद्र त्रिभिरग्निभि संप्रदीप्ता
भवचारके दुखशतैर्विनिबद्धचित्ताः ॥ ११ ॥
क्लेशावृताश्च अविलोकन छन्दहीनाः
सुगतान धर्मरतनानुप्रनष्ट बालाः ।
संसारस्रोतअनुवाहिन मोक्षत्रस्ता 15
मे त्रायितव्य दृढ वीर्य समारभन्ते ॥ १२ ॥
ज्ञानाभिलाष अनपेक्ष जगार्थचारी
व्युपरीक्षते कतम हेतु जगस्य मोक्षे ।
नान्यत्र नावरणज्ञान तथागतानां
ज्ञानं च प्रज्ञप्रभवं सुगताननन्तम् ॥ १३ ॥ 20
प्रज्ञा श्रुताच्चु इति चिन्तयि बोधिसत्त्वो
ज्ञात्वा तमारभति वीर्य श्रुतार्थचारी ।
रात्रिंदिवं श्रवणहेतु अनन्यकर्मा
अर्थार्थिको भवति धर्मपरायणश्च ॥ १४ ॥
मणिमुक्तिरत्ननिलयान् प्रियबान्धवांश्च 25
राज्यं अनन्त विविधान् पुर स्थानश्रेष्ठान् ।
भार्यासुतांश्च परिवार मनोनुकूलान्
अनपेक्षचित्तु त्यजते विदु धर्महेतोः ॥ १५ ॥
शिर हस्तपाद नयन स्वकमात्ममांसं
जिह्वा च दंष्ट्र श्रव नासिक शोणितं च । 30
हृदयं तुपाद्य प्रिय मज्ज परित्यजन्ति
ना दुष्करेतमथ दुष्कर यच्छृणोति ॥ १६ ॥

यदि कश्चिदेनमुपगम्य वदेय्य एवं
यदि अग्निगर्भ प्रपते ज्वलितापि घोरम्।
प्रापिष्य धर्मरतनं सुगतोपनीतं
श्रुत्वा अदीनमनसः प्रपते गुणार्थी ॥ १७ ॥
एकस्य धर्मपद अर्थ सुमेरुमूर्ध्नां
त्रिसहस्र अग्निरुचितं अपि ब्रह्मलोकात्।
सूदुर्लभा इमि जिनस्य उदारबोधिः
ये मानुष्येण सुख लभ्यति एवरूपम् ॥ १८ ॥
यावत्तरेण पवरर्षिण ज्ञानलाभ-
स्तावत्तरं दुखमवीचिकमुत्सहामि।
किं वा पुनर्विविधमानुषदुःखस्कन्धं
हन्ताभ्युपेमि वरधर्मिपदार्थिदुःखम् ॥ १९ ॥
धर्मं च श्रुत्व पुन योनिषु चिन्तयाति
ध्यानाप्रमाण चतुरश्च तथा अरूप्या।
पञ्चाप्यभिज्ञ प्रवरा अभिनिर्हरन्ति
ना चापि तेषु वशिता उपपद्य याति ॥ २० ॥
अत्र स्थिता गुणधरा बहुबुद्धकोट्यः
पूज्यन्ति निश्चितमना शृणुवन्ति धर्मम्।
तनुभूत्व मिथ्यपगताः परिशुद्धयन्ति
स्वर्णं यथा विगतदोष प्रमाणतुल्यम् ॥ २१ ॥
अत्र स्थिता गुणधरास्त्रिदशाधिपत्यं
कारेन्ति ईश्वर निवर्तितु कामरागाः।
मरुसंघ नेकविविधान् कुशलान मार्गे
स्थापेन्त्यनन्यमन बुद्धगुणाभिलाषे ॥ २२ ॥
अत्र स्थिता जिनसुता विरियारभन्ते
लब्ध्वा समाधिन सहस्रशतं अनूनम्।
पश्यन्ति बुद्धवर लक्षणचित्रिगात्रां
भूयो अतः प्रणिधिश्रेष्ठ गुणाप्रमाणाः ॥ २३ ॥
इत्येषा तृतिया भूमिनिर्दिष्टा सुगतात्मजाः।
सर्वलोकहितैषीणां बोधिसत्वाननुत्तमा ॥ २४ ॥



## ४ अर्चिष्मती नाम चतुर्थी भूमिः ।

### उपक्रमगाथाः ।

एवं श्रुणित्व चरणं विपुलं
 भूम्युत्तमं मनुरमं प्रवरम् ।
संहर्षिता जिनसुतात्तमना 5
 अभ्योकिरन्ति कुसुमेभि जिनम् ॥ १ ॥
संकम्पिता लवणतोयधरा
 इह धर्मदेशनमुदीरयताम् ।
मरुकन्यका अभिमनोरुचिराः
 संगीतियुक्त वरधर्मरताः ॥ २ ॥ 10
वशवर्ति देवपतिरात्तमना
 मणिरत्न दिव्य सुगतस्य क्षिपी ।
वाचं अभाषि अथ एव जिनो
 उत्पन्न अर्थ गुणपारगतो ॥ ३ ॥
किं कारणं तथ हि धर्मवरं 15
 संबोधिसत्त्वचरणं परमम् ।
भूमिर्विदू न इयमद्य श्रुता
 यस्याश्रवो दुर्लभ कल्पशतैः ॥ ४ ॥
भूयः प्रभाष नरदेवहिता
 चर्यावरां जिनसुतान विदू । 20
श्रोष्यन्ति ते मरुतसंघगणा
 भूतं विनिश्चयमनन्यपदम् ॥ ५ ॥
विमुक्तिचन्द्रः पुनर्वीरो आलपी सुगतात्मजम् ।
चतुर्थीं संक्रमन्तानां गोचरं भण उत्तमम् ॥ ६ ॥

### उपसंहारगाथाः । 25

परिकर्मिता तृतीयभूमिप्रभंकराय
 सत्वचर्यलोक तथ धर्म विचार्यमाणः ।
आकाशधातु मनधातु त्रयश्च धातु
 अधिमुक्ति आशय विशुद्धि समाक्रमन्ति ॥ ७ ॥
सहप्राप्तु अर्चिष्मति भूमि महानुभावः 30
 संवृत्तु शास्तु कुलि भूयु विवर्तियत्वे ।

अभेद्य बुद्धरतने तथ धर्मसंघे
उदयव्ययस्थिति निरीहक प्रेक्षमाणः ॥ ८ ॥
लोकप्रवृत्ति क्रियकर्म भवोपपत्तिं
संसारनिर्वृतिविभावन क्षेत्रसत्त्वान् ।
5 धर्मांच्च पूर्वमपरान्त क्षयानुत्पादं
संवृत्तु भावयति शास्तु कुलानुवर्ती ॥ ९ ॥
सो एषु धर्मु समुपेतु हितानुकम्पी
भावेति कायमपि वेदन चित्तधर्मान् ।
अध्यात्मबाह्युभयथा विदु भावयाति
10 स्मृत्योपस्थानभावन निकेतवर्जिता ॥ १० ॥
पापक्षयात्कुशलधर्मविवर्धिता च
सम्यक्प्रहाण चतुरो विदु भावयन्ति ।
चतुऋद्धिपाद बल इन्द्रिय भावयन्ति
बोध्यङ्गरत्न रुचिरं तथ मार्ग श्रेष्ठम् ॥ ११ ॥
15 भावेन्ति तान् जनयतां समवेक्ष्य बुद्धिम्
उपस्तम्भयन्ति प्रणिधिं कृतपूर्वमैत्राः ।
सर्वज्ञज्ञानमभिप्रार्थन बुद्धक्षेत्रं
बलश्रेष्ठमुत्तमपथं अनुचिन्तयन्तः ॥ १२ ॥
वैशारदं अपि च धर्म अहार्य शास्तुः
20 वरबुद्धघोषमभिप्रार्थयमान धीराः ।
गम्भीरमार्गरतनं च विमोक्षस्थानं
महतामुपाय समुदागम भावयन्ति ॥ १३ ॥
सत्कायदृष्टिविगताश्च द्विषष्टिदृष्टी
अत्तात्तमीयविगतास्तथ जीवलाभम् ।
25 स्कन्धास्तु द्वार तथ धातुनिकेतस्थानं
सर्वप्रहाण विदुषं चतुथाय भूम्याम् ॥ १४ ॥
सो यानिमानि सुगतेन विवर्णितानि
कर्माणि क्लेशसहजानि अनर्थकानि ।
तानि प्रहाय विदु आशयतो विशुद्धा
30 धर्मारभन्ति कुशलं जग-तायणार्थम् ॥ १५ ॥
सुस्निग्धचित्त भवती विदु अप्रमत्तो
मृदुचित्त सार्जव हितासुखआवहश्च ।

अपरिक्लिष्टश्च परिमार्गति उत्तमार्थं
　ज्ञानाभिषेकमभिलाषि जगार्थचारी ॥ १६ ॥
गुरुगौरवेषुपगतः प्रतिपत्तिकामो
　भवते कृतज्ञ सुमनाश्च अकूहकाश्च ।
निर्मायतागहन आशयसूरतश्च　5
　अविवर्त्यवीर्यु भवते समुदानयन्तः ॥ १७ ॥
तस्यात्र भूमि रुचिराय प्रतिष्ठितस्य
　अध्याशयं अपि च शुद्धमुपेति धर्मम् ।
अधिमुक्ति तप्यति विवर्धति शुक्लधर्मो
　मलकल्मषं विमति संशय सर्व यान्ति ॥ १८ ॥　10
अत्र स्थिता नरवरर्षभ बोधिसत्त्वाः
　सुगताननेकनयुतानभिपूजयन्ति ।
शृण्वन्ति धर्म यथ शासनि प्रव्रजन्ति
　असंहार्य शक्य कृतकाञ्चनभूषणं वा ॥ १९ ॥
अत्र स्थितान विदुना गुणमाशयं च　15
　ज्ञानं उपाय चरणं च विशुद्धिमार्गः ।
नो शक्यु मारनयुतेभि निवर्तनाय
　रत्नप्रभेव यथ वर्षजलैरहार्या ॥ २० ॥
अत्र स्थिता नरमरुद्गणपूजनार्हा
　भोन्ती सुयामपतिरीश्वर धर्मचारी ।　20
सत्त्वानि दृष्टिगहनाद्विनिवर्तयन्ति
　संभारयन्ति कुशला जिनज्ञानहेतोः ॥ २१ ॥
वीर्योपपेत शतकोटि मरर्षभाणां
　पश्यन्त्यनन्यमनसः सुसमाहितत्वात् ।
तत उत्तरिं बहुकल्पमभिनिर्हरन्ति　25
　ज्ञानाकरा प्रणिधिश्रेष्ठ गुणार्थचारी ॥ २२ ॥
चतुर्थी इतियं भूमिर्विशुद्धा शुभचारिणी ।
गुणार्थज्ञानयुक्तानां निर्दिष्टा सुगतात्मजाः ॥ २३ ॥



## ५ सुदुर्जया नाम पञ्चमी भूमिः ।

### उपक्रमगाथाः ।

चरणमथ श्रुणित्वा भूमिश्रेष्ठां विदूनां
जिनसुत परितुष्टा हर्षिता धर्महेतोः ।
5 गगनि कुसुमवर्षं उत्सृजन्ती उदग्राः
साधु सुगतपुत्र व्याहृतं ते महात्मा ॥ १ ॥
मरुपति वशवर्ती सार्ध देवागणेन
खगगत सुगतस्य पूजनार्थं उदग्रा ।
विविधरुचिरमेघाः स्निग्धआभा मनोज्ञाः
10 अभिकिर सुगतस्य हर्षिताः प्रीणिताश्च ॥ २ ॥
गीतरुत मनोज्ञा वाद्यतूर्याभिनादा
देववधुप्रयुक्ताः शास्तु संपूजनार्थम् ।
जिन पुन तथरूपं दर्शयन्ति स्म स्थानं
सर्वरुतस्वरेभी एव शब्दः प्रयुक्तः ॥ ३ ॥
15 सुचिरेण आशयु प्रपूर्ण मुनेः
सुचिरेण बोधि शिव प्राप्त जिनः ।
सुचिरेण दृष्ट नरदेवहितः
संप्राप्त देवपुरि शाक्यमुनिः ॥ ४ ॥
सुचिरेण सागरजलाः क्षुभिताः
20 सुचिरेण आभ शुभ मुञ्चि जने ।
सुचिरेण सत्त्व सुखिताः ‿ ‿ –
सुचिरेण शासु श्रुत कारुणिकः ॥ ५ ॥
सुचिरेण संगमु महामुनिना
संप्राप्त सर्वगुणपारमितः ।
25 मद मान दर्प प्रजहित्व तमं
पूजार्हु पूजिम महाश्रमणम् ॥ ६ ॥
[ इह पूजि कृत्व खगमार्गगता ]
इह पूजि कृत्व सुख नेकविधम् ।
इह पूजि कृत्व दुखसर्वक्षये
30 इह पूजि कृत्व जिन ज्ञानवरम् ॥ ७ ॥
गगनोपमः परमशुद्धु जिनु
जगती अलिप्तु यथ पद्मु जले ।

अभ्युद्गतो उदधि मेरुरिव
हर्षित्व चित्तु जिन पूजयर्थां ॥ ८ ॥[1]
अथाब्रवीद्वज्रगर्भं विमुक्तिचन्द्रो विशारदः ।
पञ्चम्या भूम्य आकारान् निर्दिशस्व विशारद ॥ १० ॥

## उपसंहारगाथाः । 5

एवं विशोधित चतुर्षु जिनचरीषु
बुद्ध्या त्रियाध्वसमता अनुचिन्तयन्ति ।
शीलं च चित्तप्रतिपत्तितु मार्गशुद्धिः
काङ्क्षाविनीत विदु पञ्चमि आक्रमन्ति ॥ ११ ॥
स्मृति चाप इन्द्रिय इषु अनिवर्तिताश्च 10
सम्यक्प्रहाण हय वाहन ऋद्धिपादाः ।
पञ्च बलाः कवच सर्वरिपूअभेद्याः
शूराणिवर्ति विदु पञ्चमि आक्रमन्ति ॥ १२ ॥
ह्यपत्राप्यवस्त्रविदुनां शुचिशीलगन्धो
बोध्यङ्गमाल्यवरध्यानविलेपनं च । 15
प्रज्ञाविचारणविभूषणुपायश्रेष्ठम्
उद्यानधारणित पञ्चमिमाक्रमन्ति ॥ १३ ॥
चतुऋद्धिपादचरणाः स्मृतिशुद्धिग्रीवाः
कृपमैत्रश्रेष्ठनयना वरप्रज्ञदंष्ट्रा ।
नैरात्म्यनाद रिपुक्लेश प्रधर्षमाणा 20
नरसिंह सम्य विदु पञ्चमिमाक्रमन्ति ॥ १४ ॥
ते पञ्चमीमुपगता वरभूमिश्रेष्ठां
परिशुद्धमार्ग शुभमुत्तरि भावयन्ति ।
शुद्धाशया विदु जिनत्वनुप्रापणार्थी
कृपमैत्रखेदविगता अनुचिन्तयन्ति ॥ १५ ॥ 25
संभारपुण्युपचया तथ ज्ञान श्रेष्ठं
नैका उपाय अभिरोचनभूम्य भासान् ।
बुद्धाधिष्ठान स्मृतिमां मतिबुद्धिप्राप्ता
चत्वारि सत्य निखिलाननुचिन्तयन्ति ॥ १६ ॥

---

१ After stanza 8, there appears the following stanza in Tibetan translation, but no Ms. gives its sanskrit original:-

de-skad dbyaṅ's-su brjod byas-nas ।
lha-yi-bu mo brgya-maṁ-ba ।
dkaḥ-bas rgyas-pas rab-tu-trita ।
Śin-tu-dkaḥ-bas rima gro-byed ॥ ९ ॥

परमार्थसत्यमपि संवृतिलक्षणं च
सत्यविभागमथ सत्यनितीरणं च।
तथ वस्तु सास्रव क्षयं अपि मार्गसत्यं
यावन्तनावरणसत्य समोसरन्ति ॥ १७ ॥

5 एवं च सत्य परिमार्गति सूक्ष्मबुद्धिः
न च तावदनावरणप्राप्तु विमोक्ष श्रेष्ठम्।
ज्ञानाधिमुक्तिविपुलात्तु गुणाकराणाम्
अतिभोन्ति सर्वजगतो अर्हप्रत्ययानाम् ॥ १८ ॥

सो एव सत्यअभिनिर्हृत तत्त्वबुद्धिः
10 जानाति संस्कृत मृषाप्रकृती असारम्।
कृपमैत्रआभ लभते सुगतान भूयः
सत्त्वार्थिकः सुगतज्ञान गवेषमाणः ॥ १९ ॥

पूर्वापरे विदु निरीक्षतु संस्कृतस्य
मोहान्धकारतमसावृत दुःखलग्ना।
15 अभ्युद्धरोति जगतो दुखस्कन्धवृद्धान्
नैरात्म्यजीवरहितांस्तृणकाष्ठतुल्यान् ॥ २० ॥

क्लेशाद्वयेन युगपत्पुनर्भासि त्र्यध्वं
छेदो दुखस्य न च अन्त समोसरन्तः।
हन्तो प्रणष्ट जन तेऽतिदयाभिजाता
20 संसारस्रोत न निवर्तति निःस्वभावम् ॥ २१ ॥

स्कन्धालया उरगधातु कुदृष्टिशल्याः
संतप्त अग्निहृदयावृत अन्धकारे।
तृष्णार्णवप्रपतिता अवलोकनत्वात्
जिनसार्थवाहविरहा दुखअर्णवस्थाः ॥ २२ ॥

25 एवं विदित्व पुनरारभतेऽप्रमत्तो
तच्चैव आरभति सर्वजगद्विमोक्षी।
स्मृतिमन्तु भोन्ति मतिमान् गतिमान् धृतीं च
ह्रींमांश्च भोन्ति तथ बुद्धिन प्रज्ञवांश्च ॥ २३ ॥

अवितृप्तु पुण्युपचये तथ ज्ञान श्रेष्ठं
30 नो खेदवान्न शिथिलो बलमेषमाणः।
क्षेत्रं विधाय जिनलक्षणबुद्धघोषम्
अवितृप्तसर्वक्रिय सत्त्वहितार्थयुक्तः ॥ २४ ॥

परिपाचनाय जगतो विदु शिल्पस्थानान्
लिपिमुद्रसंख्यगणधातुचिकित्सतन्त्रान् ।
भूतग्रहाविषमरोगनिवर्तनार्थं
स्थापेन्ति शास्त्र रुचिरान् कृपमैत्रबुद्धी ॥ २५ ॥ 5
वरकाव्यनाटकमतिं विविधप्रहर्षान्
नद्योदियानफलपुष्पनिपद्यस्थानान् ।
स्थापेन्ति नेकक्रिय सत्त्वसुखापनार्थं
रत्नाकरांश्च उपदर्शयि नैकरूपान् ॥ २६ ॥
भूमीचलं च ग्रह ज्योतिष चन्द्रसूर्यौ
सर्वाङ्गलक्षणविचारणराज्यस्थानम् । 10
आरूप्यध्यान तथभिज्ञ अथाप्रमाणा
अभिनिर्हरन्ति हितसौख्यजगार्थकामाः ॥ २७ ॥
इह दुर्जयामुपगता वरप्रज्ञचारी
पूजेन्ति बुद्ध नयुता श्रृणुवन्ति धर्मम् ।
तेषां शुभं पुनरुत्तप्यति आशयश्च 15
स्वर्णं यथा मुसरगल्वयसंविमृष्टम् ॥ २८ ॥
रत्नामया ग्रहविमान वहन्ति वाता
ते येहि तेहि तु वहन्ति असंहृताश्च ।
तथ लोकधर्मि चरमान जगार्थचारी
असंहार्य भोन्ति यथ पद्म जले अलिप्तम् ॥ २९ ॥ 20
अत्र स्थिता तुषित ईश्वर ते कृतावी
नाशेन्ति तीर्थ्यचरणान् पृथुदृष्टिस्थानान् ।
यच्चाचरन्ति कुशलं जिनज्ञानहेतोः
सत्त्वान त्रात भवमो दशभिर्बलाढ्यैः ॥ ३० ॥
ते वीर्यमुत्तरि समारभि अप्रमत्ताः 25
कोटीसहस्र सुगतानभिपूजयन्ति ।
लब्ध्वा समाधि विदु कम्पयि क्षेत्रकोटी
प्रणिधीविशेषु अनुभूय गुणाकरानाम् ॥ ३१ ॥
इत्येषा पञ्चमी भूमिर्विचित्रोपायकोटिभिः ।
निर्दिष्टा सत्त्वसाराणामुत्तमा सुगतात्मजाः ॥ ३२ ॥ 30

## ६ अभिमुखी नाम षष्ठी भूमिः ।

### उपक्रमगाथाः ।

चरणवर श्रुणित्वा भूमिश्रेष्ठं विदूनां
गगनि सुगतपुत्रा हर्षिताः पुष्पवर्षी ।
मणिरतन उदारा आभयुक्ता विशुद्धा
अभिकिर सुगतस्य साध्विति व्याहरन्तः ॥ १ ॥
मरुत शतसहस्रा हर्षिता अन्तरीक्षे
दिविय रुचिर चित्रा रत्नचूर्णा उदाराः ।
अभिकिर सुगतेभ्यो गन्धमाल्यानुलेपान्
छत्रध्वजपताकाहारचन्द्रार्धहारान् ॥ २ ॥
मरुपति वशवर्ती सर्वदेवगणेन
उपरि खग पठित्वा मेघ रत्नामयानि ।
अभिकिरिषु प्रसन्नः पूजनार्थं जिनस्य
साधु सुगतपुत्रा व्याहरी हृष्टचित्ताः ॥ ३ ॥
अमरवधुसहस्राण्यन्तरीक्षे स्थितानि
गीत रुत मनोज्ञा वाद्यसंगीतियुक्ता ।
सर्वरुतस्वरेभ्यो एव शब्दा रवन्ते
जिन कृतु सुमनोज्ञैः क्लेशतापस्य हन्ता ॥ ४ ॥
शून्य प्रकृतिशान्ता सर्वधर्मानिमित्ताः
खगपथसमतुल्या निर्विकल्पा विशुद्धाः ।
गतिस्थितिविनिवृत्ता निष्प्रपञ्चा अशेषा
तथतसम तथत्वाद्धर्मता निर्विकल्पा ॥ ५ ॥
यैः पुनरनुबुद्धाः सर्वधर्मेव तेषां
भावि तथ अभावे इञ्जना नास्ति काचित् ।
कृप करुण जगे च मोचनार्थं प्रयुक्ता-
स्ते हि सुगतपुत्रा औरसा धर्मजाताः ॥ ६ ॥
दानचरि चरन्ते सर्व हित्वा निमित्तं
शीलसुधृतचित्ताः आदिशान्ता प्रशान्ताः ।
जगति कृत क्षमन्ते अक्षया धर्मज्ञानी
विरियबलउपेताः सर्वधर्माविविक्ताः ॥ ७ ॥
ध्याननयप्रविष्टा जीर्णक्लेशा विशुद्धाः
सर्वविदितवस्तू आदिशून्याधिमुक्ताः ।

ज्ञानक्रियबलाढ्या नित्ययुक्ता जगार्थं
　　ते हि सुगतपुत्राः शान्तपापा महात्माः ॥ ८ ॥
ईदृशा रुतसहस्र भणित्वा
　　खे स्थिताः सुमधुरा सुरकन्याः ।
तूष्णिभूत जिनमीक्षि प्रसन्ना　　5
　　धर्मगौरवरता मरुकन्याः ॥ ९ ॥

विमुक्तिचन्द्र अब्रवीद्वज्रगर्भं विशारदम् ।
कीदृशाकारनिष्पत्तिः पञ्चमायामनन्तरम् ॥ १० ॥

## उपसंहारगाथाः ।

परिपूर्णमार्गचरणा विदु पञ्चमायां　　10
　　धर्मानिमित्तत अलक्षणता अजाता ।
अनुत्पाद आदिपरिशुद्ध्यतिनिष्प्रपञ्चा
　　भावेत्व ज्ञानमति षष्ठि समाक्रमन्ति ॥ ११ ॥

धर्मा विविक्त अप्रतिग्रह निर्विकल्पा
　　मायास्वभाव द्वयभावतु विप्रयुक्ता ।　　15
अनुलोमयन्त अविलोमन्त धर्मनेत्री
　　ज्ञानान्विताः प्रवर षष्ठि समाक्रमन्ति ॥ १२ ॥

तीक्ष्णानुलोमस्थित ज्ञानबलोपपेताः
　　समुदागमं विभवु प्रेक्षिषु सर्वलोके ।
मोहान्धकारप्रभवं जगसंभवात्मा　　20
　　तस्यैव मोहविगमेन प्रवृत्ति नास्ति ॥ १३ ॥

विचिनन्ति प्रत्ययकृतिं परमार्थशून्यां
　　क्रिय हेतुप्रत्ययसमङ्ग क्रियाविरोधौ ।
याथावतः करकपेतक्रियां विदित्वा
　　विचिनन्ति संस्कृत घनाभ्रसमं निरीहम् ॥ १४ ॥　　25

सत्येषुऽज्ञानु परमार्थतु सा अविद्या
　　कर्मा च चेतनबलेन विभागप्राप्तम् ।
चित्तं निश्रित्य सहजं पुन नामरूपम्
　　एवंमुखा भवति याव दुखस्य स्कन्धः ॥ १५ ॥　　30

ते चित्तमात्र ति त्रैधातुकमोतरन्ति
　　अपि चा भवाङ्ग इति द्वादश एकचित्ते ।

संरागु जातु अपि चित्तु प्रभावितस्तु
एवं च संभवक्षयं पुन चित्तभागम् ॥ १६ ॥
कार्यं अविद्यद्वय कुर्वति मोहभावे
मोहेभि हेतु वहते पुन चेतनायाः ।
5 एवं च याव जरध्वंसनस्कन्धभेदम्
अनु सर्व दुःखप्रभवं क्षयतः अभावः ॥ १७ ॥

उच्छेदु नो भवति प्रत्ययतामविद्या
नोच्छेद्यतापि कर प्रहाय संनिरोधम् ।
मोहो तेषु च उपादानं क्लेशवर्त्म
10 कर्म भवं च अपि चेतन शेष दुःखा ॥ १८ ॥

मोहं तु आयतन संस्कृतदुःख तेषां
स्पर्शं च वेदन सुखादुखताय दुःखा ।
शेषानमङ्गनपरिणामदुःखवृद्धिः
व्युच्छेद तस्य दुःखता न हि आत्ममस्ति ॥ १९ ॥

15 अध्वेषु पूर्वं तमचेतनसंस्कृतस्य
विज्ञान वेदन विवर्तति प्रत्युत्पन्नम् ।
अपरान्तु तेषु प्रभवो दुखसंभवेयम्
आपेक्ष च्छेदु प्रसरं च निरीक्षयन्तः ॥ २० ॥

मोहस्य प्रत्ययतु संभवते विबन्धा
20 विनिबन्धनव्ययक्षये सति प्रत्ययानाम् ।
हेतोश्च मूलप्रभवं न तु हेतुभेदं
व्युपरीक्षते च जिन ज्ञान स्वभावशून्यम् ॥ २१ ॥

अनुलोम मोहप्रभवं च प्रभावतश्च
प्रतिलोमहेतु क्षयतो भव सर्वच्छेद्यम् ।
25 गम्भीरप्रत्ययतमस्य सतोऽसतश्च
व्युपरीक्षते दशविधं अनिकेतबुद्धिः ॥ २२ ॥

संधी भवाङ्गतु तथापि च कर्मस्थानम्
अविभागतस्त्रिविधु वर्त्मनि पूर्वतश्च ।
त्रियहेतु दुःखविभवा उदय व्ययं च
30 अभावतोऽक्षयत प्रत्यय आनुलोमम् ॥ २३ ॥

एवं प्रतीत्यसमुत्पाद समोतरन्ति
मायोपमं वितथ वेदकर्मापनीतम् ।

स्वप्नोपमं च तथता प्रतिभास चैव
　　बालान मोहन मरीचिसमस्वभावम् ॥ २४ ॥
या एव भावन स शून्यत पण्डितानां
　　रति प्रत्ययान भवते इदमानिमित्तम् ।
जानित्व जातु वितथं प्रणिधानु नास्ति　　5
　　अन्यत्र सत्त्वकृपया उपपद्ययन्ति ॥ २५ ॥
एवं विमोक्षमुख भावयि ते महात्मा
　　कृपबुद्धि भूय तथ बुद्धगुणाभिलाषी ।
संयोगसंस्कृतिकृत व्युपरीक्षमाणो
　　नियताशयो भवति नैकगुणोपपेतः ॥ २६ ॥　　10
पूर्णा सहस्र दश शून्यतये समाधी
　　तथ आनिमित्तवरदं च विमोक्ष तायी ॥ २७ ॥
प्रह्लादयन्ति जगदाशय चन्द्रआभा
　　वहमानु वात चतुरो असंहार्यप्राप्ता ।
अतिक्रम्य मारपथमाभ जिनौरसानां　　15
　　प्रशमेन्ति क्लेशपरिताप दुखार्दितानाम् ॥ २८ ॥
इह भूमिदेशुपगता मरुताधिपास्ते
　　भोन्ती सुनिर्मित कृतावधिमानघाती ।
यं चैव आरभिषु ज्ञानपथोपपेता
　　असंहार्य श्रावकगती अतिक्रान्त धीराः ॥ २९ ॥　　20
आकाङ्क्षमाणु सुगतात्मज वीर्यप्राप्ताः
　　कोटीशतसहस्रपूर्ण समाधि लब्धाः ।
पश्यन्ति एकक्षणि बुद्ध दशद्दिशासु
　　प्रतपन्ति सूर्य इव मध्यगु ग्रीष्मकाले ॥ ३० ॥
गम्भीर दुर्दशा सूक्ष्म दुर्ज्ञेया जिनश्रावकैः ।　　25
षष्ठी भूमिर्महात्मानामाख्याता सुगतात्मजाः ॥ ३१ ॥



## ७ दूरंगमा नाम सप्तमी भूमिः ।

### उपक्रमगाथाः ।

अथ विविधरुचिरमेघान् मरुद्गणोऽभिकिरिषु वेगप्राप्ताः ।
प्रव्याहरन्ति मधुरा गिरिवर शुभ प्रीतिसंपूर्णाः ॥ १ ॥
साधु वरतीक्ष्णचित्ता गुणशतसमुपेतज्ञानवशवर्तिम् ।
वरचरणं परितुष्टं जगद्धितवरपुण्डरीकाणाम् ॥ २ ॥
तद् प्रवरमतुलमाभा महेश्वराः खेगता नरवरस्य ।
वररुचिरगन्धमेघानभिकिरि क्लेशौघमपहर्तुम् ॥ ३ ॥
प्रव्याहरन्ति मधुरं मरुद्गणा हर्षकररुचिरघोषाः ।
परमसुलब्धलाभाः श्रुतु यैरयु भूमिनिर्देशः ॥ ४ ॥
तूर्यं मधुरघोषयुक्त मरुकन्याः प्रीणितमनोभिः ।
सुचरसुगतानुभावाद्वरचरिरियमीदृशी प्रोक्ता ॥ ५ ॥
सुमनी सुचरणश्रेष्ठः सुदान्त दमकान लोकमहितानाम् ।
अतिक्रम्य सर्वलोकं लोकचरिं दर्शयी सूक्ष्माम् ॥ ६ ॥
दर्शेन्ति काय विविधान् कायाकार्यांश्च धर्मतोपेताः ।
शमथः समितिविभक्तो भणति घोषं न चाक्षरं रवति ॥ ७ ॥
क्षेत्रशतमाक्रमन्ते पूजेन्ति नायकान् परमपूजियान् ।
आत्मजनितक्षेत्रसंज्ञा विधुनित्वा ज्ञानवशवर्ती ॥ ८ ॥
परिपाचयन्ति सत्त्वान्न चात्मपरसंज्ञ सर्वश उपेन्ति ।
शुभ संचिनन्ति प्रवरं न चापि शुभसंचयनिकेताः ॥ ९ ॥
रागरजदोषमोहैः पश्यित्व सर्वलोक ज्वलमानान् ।
वर्जेति सर्वसंज्ञा वीर्यं वरमारभी कृपया ॥ १० ॥
मरुकन्या देवसंघाश्च पूजेन्ता वरस्वरम् ।
तूष्णींभावरताः सर्वे प्रेक्षन्ते पुरुषर्षभम् ॥ ११ ॥
परिषद्विप्रसन्नेयमवोचत् सुगतात्मजम् ।
सप्तम्या भूमेराकारान् निर्दिशस्व गुणाकर ॥ १२ ॥

### उपसंहारगाथाः ।

गम्भीरज्ञान परमार्थपदानुसारी
षड्भूमिनिश्चितमतिः सुसमाहितात्मा ।
प्रज्ञामुपाय युगपद्यभिनिर्हरन्तो
भूम्याक्रमन्ति विदु सप्तमि चर्यश्रेष्ठाम् ॥ १३ ॥

शून्यानिमित्तप्रणिधीकृपमैत्रयुक्ता
　बुद्धानुधर्म सुगतानुग पूजयन्तः ।
ज्ञानेन शुभमहपुण्यबलेभ्यतृप्ता-
　स्तामाक्रमन्ति विदु सप्तमि भूमिदेशम् ॥ १४ ॥

त्रैधातुकेन अधिवास विवेकप्राप्ताः　　5
　शान्तश्च क्लेशबलशान्तिजगाभिकाङ्क्षी ।
प्रतिभास माय सुपिनाद्वयधर्मचारी
　कृप दर्शयन्ति विदु सप्तमिमाक्रमन्ति ॥ १५ ॥

शोधेन्ति क्षेत्र खसमाशय निर्विकल्पा
　जिनलक्षणैरुपगतोऽचलधर्मतायाम् ।　　10
अभिलाप्यघोषविगता जगतोषणार्थं
　क्षणज्ञान चित्तस्य जिनान समोसरन्ति ॥ १६ ॥

अभासप्राप्त इमि धर्म विचारयन्ति
　आक्रान्त भूमिप्रवरां जगदर्थकाराः ।
ते अत्र भूम्यस्थित सत्त्वचरी अनन्तान्　　15
　विचिनन्ति कर्म सुगतान् नियुताप्रमाणान् ॥ १७ ॥

क्षेत्रांश्च नैकविधधर्मथ कल्पसंख्यान्
　अधिमुक्तिआशय च चित्तविचित्रधारान् ।
त्रियाणदेशनमनन्त समोसरन्ति
　अस्माभि सत्त्व परिपाचयितव्यमेतत् ॥ १८ ॥　　20

ये ते ज्ञाननिचिता वरमार्गप्राप्ता
　ईर्यापथैश्चतुर्भि प्रज्ञमुपाययुक्ताः ।
सर्वस्मि चित्तक्षणि बोधिगुणानुप्राप्ताः
　परिपूरयन्ति दश पारमिताप्रदेशान् ॥ १९ ॥

सर्वेषु मार्गकुशलस्य य एष दानं　　25
　शीलं चँ क्लेशप्रशमं क्षममक्षतित्वम् ।
वीर्यं च भूयु अनु उत्तरि आरभन्ते
　मार्गे अचल्यतय ध्यानगुणान्वितानाम् ॥ २० ॥

अनुत्पादक्षान्ति विरजा वरप्रज्ञ श्रेष्ठा
　पर्णामुपाय प्रणिधी भुयु काङ्क्षि लक्ष्मी ।　　30

अतोऽमर्दयित्व बलज्ञाननितीरणत्वाद्
एवं खु बोधिगुण सर्वक्षणेनुपेन्ति ॥ २१ ॥

आलम्बनात्तु प्रथमा गुणपारिपूरि
द्वितीया मलापनय ऊर्ध्वे विबन्धच्छेदम् ।
5 चतुर्थाय मार्गु समताक्रिय पञ्चमाय
अनुत्पाद आह्वय विदुः पुन षष्ठवृत्तिः ॥ २२ ॥

इह सप्तमीमुपगताः सकलं गुणानि
प्रणिधान नैकविविधानभिनिर्हरन्ति ।
किं कारणं यदुत ज्ञानक्रियाभ्युपेन्ति
सा अष्टमीप्रभृति सर्वविशुद्ध्युपेन्ति ॥ २३ ॥

10 दुरतिक्रमा दूरंगमा बहुस्थानकर्मा
क्षेत्रान्तरद्विपथमेव यथोत्तरन्ति ।
विचरन्ति सप्तसु अलिप्त नृपो यथैव
मार्गस्थिता न पुन सर्वतिक्रान्त धीराः ॥ २४ ॥

यद अष्टमीमुपगताः पुन ज्ञानभूमिम्
15 अतिक्रान्त चित्तविषये स्थित ज्ञानकर्मे ।
ब्रह्मा न पेक्षति जगन्नरमानुषात्मा
एवं चरन्ति विदु पद्ममिवा अलिप्ताः ॥ २५ ॥

अत्र स्थिता विविधक्लेशमतिक्रमन्ति
तेषां न क्लेशचरि नो च क्षयोऽनुप्राप्तिः ।
20 मार्गस्थिता न तद क्लेशचरिं चरन्ति
संपूर्ण आशय जिनज्ञ क्षयो न तावत् ॥ २६ ॥

ये लौकिका विविधशिल्पक्रियाप्रयोगा
आजाति सर्वविदुना स्थित शास्त्रज्ञाने ।
ध्याना अभिज्ञ बल भावयन्तोऽभ्युपेन्ति
25 भूयः समाधि विविधानभिनिर्हरन्ति ॥ २७ ॥

अतिक्रान्त श्रावकचरिं तथ प्रत्ययानां
स्थित बोधिसत्त्वचरणे विदु अप्रमाणाम् ।
पूर्वे हि आशयतया इह ज्ञानताया
नृपतीसुतो यथ विवृद्धबलोपपेतः ॥ २८ ॥

गाम्भीर्यतामुपगता भुयु आरभन्ति
चित्तं निरोधुपगता न च साक्षिक्रियाः।
यथा सागरे उपगताः स्थित यानपात्रे
प्रत्यक्ष सर्व उदके न च यानहानिः ॥ २९ ॥

भूयो उपायबलप्रज्ञवराभ्युपेता 5
दुर्ज्ञेयसर्वजगज्ञानक्रियागुणाढ्याः।
पूजेन्ति बुद्ध नियुता भुयु शुद्धिभावा
यथा तद्विभूषणविचित्रितु नैकरत्नैः ॥ ३० ॥

अत्र स्थितान विदुनां वरप्रज्ञ आभा
शोषेन्ति तृष्णसलिलं यथ भास्कराभाः। 10
ते अत्र भूम्युपगता वशवर्तिनश्च
भोन्ति कृती कुशल ज्ञानफलोपदेशैः ॥ ३१ ॥

आकाङ्क्षमाण दृढवीर्यबलाभ्युपेताः
कोटीनयूतशत बुद्धसहस्र पूर्णान्।
पश्यन्ति सर्वदिशतासु समाहितत्वाद् 15
भूयोऽप्यतः प्रणिधिश्रेष्ठ गुणाप्रमेयाः ॥ ३२ ॥

दुर्ज्ञेया सर्वलोकेन वशिप्रत्येकचारिभिः।
इत्येषा सप्तमी भूमिरुपायप्रज्ञशोधना ॥ ३३ ॥



# ८ अचला नाम अष्टमी भूमिः ।

## उपक्रमगाथाः ।

एव श्रुत्व चरणं विदुन श्रेष्ठं
देवसंघ मुदिता मरुपतिश्च ।
5 बोधिसत्त्व बहवो जगद्धितैषि
पूजयन्ति सुगतं जिनसुतांश्च ॥ १ ॥
पुष्पमाल्य रुचिरा ध्वजपताका
गन्धचूर्ण रुचिरा रतनवस्त्रा ।
छत्र नैकरुचिरान् मणिप्रत्युप्तान्
10 हारमेघप्रवरानभिसृजन्ति ॥ २ ॥
मनोज्ञघोषमधुरं सुरवन्दू
मुक्त नैकतुरियप्रवरनाटान् ।
पूजनार्थि जिनपुत्र सुगतांश्च
वर्णश्रेष्ठ मुनिनो उदाहरन्ति ॥ ३ ॥
15 सर्वि दर्शि वृषभी द्विपादश्रेष्ठो
दर्शि बुद्धविषयं जगद्धितार्थम् ।
शब्दमेघ रुचिरान् प्रताडमाना-
स्तूर्यताल विविधास्तद प्रमुक्ताः ॥ ४ ॥
वालकोटि सुगताः शतसहस्रा
20 गङ्गाकोटि नयुता रजविशिष्टाः ।
क्षेममप्रतिसमाः प्रवरश्रेष्ठं
देशयन्ति वृषभी विरजधर्मम् ॥ ५ ॥
प्रेत तिर्य नरका मनुजदेवाः
यक्ष रक्ष भुजगा असुरसंघा ।
25 .....................
नानकर्मविषये समनुभोन्ति ॥ ६ ॥
सर्वक्षेत्रविषये धुतरजानां
चक्र श्रेष्ठप्रवरं तदनिर्वृत्तम् ।
देशयन्ति मधुरं सुगतघोषं
30 संशचित्त जगतस्तथ विचारन् ॥ ७ ॥
सत्त्वकायि सुगता विविधक्षेत्रा
क्षेत्रि सत्त्वप्रवराः पुनर्विपाकाः ।

देवमानुषगती तथ विचित्रा
ज्ञात्व सर्वे सुगतो भणति धर्मम् ॥ ८ ॥
सूक्ष्मसंज्ञ भवति विपुलक्षेत्रे
विपुलसंज्ञ भवति रजनिमित्ते ।
एवमादि विविधां सुगतऋद्धिं 5
सर्वलोक भणतो न क्षेपयेयुः ॥ ९ ॥
ईदृशं वचमाहात्म्यं वचित्वा मधुरस्वरम् ।
प्रशान्ता परिषत्प्रीता प्रेक्षते वदतां वरम् ॥ १० ॥
प्रशान्त पर्षदं ज्ञात्वा मोक्षचन्द्रोऽब्रवीत्पुनः ।
अष्टम्या भूमिआकारां प्रवेशं च निदर्शय ॥ ११ ॥ 10

## उपसंहारगाथाः ।

ते भूम्य सप्तसु विशोधित प्रज्ञुपाया
मार्गा सुसंभृत महाप्रणिधानबद्धाः ।
सुप्रतिष्ठिता नरवराः कुशलोपपेता
ज्ञानाभिलाषि विदु अष्टमिमाक्रमन्ति ॥ १२ ॥ 15
ते पुण्यज्ञानुपगताः कृपमैत्रयुक्ता
ज्ञानाप्रमाणपथगाः खगबुद्धिकल्पाः ।
श्रुतधर्म निश्चितबलोपगता महर्षी
क्षान्तिं लभन्ति अनुत्पादप्रशान्तिसूक्ष्माम् ॥ १३ ॥
आदावजात अनुत्पाद अलक्षणं च 20
असंभूततमविनष्टत चाप्रवृत्तम् ।
भावस्वभावविगता तथताविकल्पा
मम चित्तचारविगताः खगतुल्यकल्पाः ॥ १४ ॥
ते एव क्षान्तिसमन्वागत निष्प्रपञ्चा
गम्भीरचाल्य विदु शान्तविचारप्राप्ताः । 25
दुर्ज्ञेय सर्वजगतारहप्रत्ययैश्च
चित्तं निमित्तग्रहसंज्ञविभावितत्वात् ॥ १५ ॥
एवं स्थितानमनुचिन्तविकल्प नास्ति
भिक्षुर्निरोध्युपगतोऽपप्रकल्पप्राप्तः ।
स्वप्नोघप्राप्त प्रतिबुद्ध तथाविकल्पा 30
ब्रह्मापुरे रतिसज्ञरहितो तथैव ॥ १६ ॥
पूर्वाधिष्ठान सुगता पुन चोदयन्ति
एषा स क्षान्ति परमा सुगताभिषेके ।

अस्माकु ज्ञान विपुलं वरबुद्धधर्मा
ते तुभ्य नास्ति त हि वीर्यु समारभायम् ॥ १७ ॥
किंचापि शान्त तव सर्वकिलेशज्वाला
ज्वलितं निशम्य पुन क्लेशगतिभ्य लोकम्।
प्रणिधान पूर्व स्मर सत्त्वहितं विचार्य
ज्ञानार्थि प्रार्थित क्रिया जगमोक्षहेतोः ॥ १८ ॥
सद एष धर्मत स्थिता तथताविकल्पा
सर्वेषु बुद्धजिनश्रावकप्रत्ययानम्।
न हि एतिना दशबलान प्रभावु लोके
नान्यत्र ज्ञानविपुलं त्रिभि अध्वसङ्गम् ॥ १९ ॥
एवं तमप्रतिसमा नरदेवपूज्या
उपसंहरन्ति बहुज्ञानमुख विचारान्।
जिनधर्मनिष्पत्तिप्रवेशमनन्तपारं
यस्या कला न भवते पुन बोधिचर्या ॥ २० ॥
एतानि प्राप्त वृषभी वरज्ञानभूमिम्
एकक्षणेन स्फरते दिशताः समन्तान्।
ज्ञानप्रवेशुपगता वरभिज्ञप्राप्ता
यथ सागरे वहनु मारुतयानप्राप्तः ॥ २१ ॥
साभोगचित्तविगताः स्थितज्ञानकर्म
विचिनन्ति क्षेत्रप्रभवं विभवस्थितिं च।
धातुश्चत्वारि विनिभागगतान तांश्च
सूक्ष्मं महद्गत विभक्ति समोसरन्ति ॥ २२ ॥
त्रिसहस्रि सर्वपरमाणुरजो तरन्ति
चत्वारि धातु जगकायि विभक्तितश्च।
रत्ना विभक्तिपरमाणु सुवर्गतीषु
भिन्दित्व ज्ञानविषयेन गणेन्त्यशेषम् ॥ २३ ॥
ज्ञाने विभावितमना विदु सर्वकायान्
स्वे कायि तत्र उपनेन्ति जगार्थहेतोः।
त्रिसहस्र सर्व च स्फरित्व विचित्ररूपान्
दर्शेन्ति काय विविधान् तथनन्तलोके ॥ २४ ॥
सूर्यं शशिं च वह्नि मारुत अन्तरीक्षे
स्वकमण्डलुस्य उदके प्रतिभासप्राप्ता।

ज्ञानोत्तमे स्थित तथाचलधर्मतायां
जग शुद्धआशय विदू प्रतिभासप्राप्ता ॥ २५ ॥
यथआशयं जगत कायविभक्तितां च
दर्शेन्ति सर्वपरिषे भुवि सर्वलोके।
वशिप्रत्ययाश्रय जिनात्मजश्रावकानां 5
दर्शेन्ति ते सुगतकाय विभूषिताङ्गान् ॥ २६ ॥
सत्त्वांश्च क्षेत्र तथ कर्मविपाक कायान्
आर्याश्रयान् विविधधर्मज्ञानकायान्।
आकाशकाय वृषभी समतामुपेतं
दर्शेन्ति ऋद्धि विविधान् जगतोषणार्थम् ॥ २७ ॥ 10
वशिता दशो विमलज्ञानविचारप्राप्ता
अनुप्राप्त ज्ञानकृत मैत्रकृपानुकूलाः।
यावच्च सर्वजिनधर्ममुपादकर्मा
त्रिसंवरैः सुस्थितमेक अचल्यकल्पाः ॥ २८ ॥
ये चा बला जिनसुतान दश अक्षोभ्या 15
तेही उपेत अविबन्धिय सर्वमारैः।
बुद्धैरधिष्ठित नमस्कृत शक्रब्रह्मै-
स्तथ वज्रपाणिबलकैः सततानुबद्धाः ॥ २९ ॥
इम भूमिदेशुपगता न गुणानमन्तो
नो शक्यते क्षयितु कल्पसहस्रकोट्यैः। 20
ते भूय बुद्ध नियुतान् समुपासयन्ते
भोन्तो उतप्त यथ भूषणु राजमूर्ध्नि ॥ ३० ॥
इम भूमिदेशुपगता विदु बोधिसत्त्वा
महब्रह्म भोन्ति सहस्राधिपती गुणाढ्याः।
त्रययानदेशन अक्षोभ्यसंहारप्राप्ता 25
मैत्रायनः शुभप्रभा जगक्लेशघाती ॥ ३१ ॥
एकक्षणेन दशक्षेत्रशतःसहस्रा
यावा रजोधातु तत्तक समाध्युपेन्ति।
पश्यन्ति तत्तक दशदिशि सत्त्वसारान्
भूयो अतः प्रणिधिश्रेष्ठ व्यूह नेकाः ॥ ३२ ॥ 30
संक्षेप एष निर्दिष्टो अष्टमाया जिनात्मजाः।
विस्तरः कल्पकोटीभिर्न शक्यः सर्वं भाषितुम् ॥ ३३ ॥

## ९ साधुमती नाम नवमी भूमिः ।

### उपक्रमगाथाः ।

इमां भूमिं प्रभाषता कम्पिताः क्षेत्रकोटयः ।
अधिष्ठाना नरेन्द्रस्य अप्रमेया अचिन्तिया ॥ १ ॥

5 आभास रुचिरा मुक्ताः कायतः सर्वदर्शिनो ।
तयावभासिताः क्षेत्राः सत्त्वाश्च सुखितास्तया ॥ २ ॥

बोधिसत्त्वसहस्राणि अन्तरीक्षे स्थितानि च ।
दिव्यातिक्रान्तपूजाय पूज्यन्ते वदतां वरम् ॥ ३ ॥

महेश्वरा देवपुत्रा वशवर्ती प्रहर्षिताः ।
10 नानाप्रकारपूजाभिः पूजेन्ति गुणसागरम् ॥ ४ ॥

ततोऽप्सरःसहस्राणि हर्षिताः प्रीणितेन्द्रियाः ।
दिव्या सुयत्ता संगीताः शास्तु पूजामजग्रयम् ॥ ५ ॥

तेभ्यश्च तूर्यनादेभ्य अनुभावान्महर्षिणः ।
ईदृशा रुतसहस्रा रवन्ती मधुरस्वराः ॥ ६ ॥

15 इमि सर्वे जिनसुता खिलमलविगता
उपगत भुवि वरसुरुचिरचरणाः ।
जगहित विचरति दशदिश वृषभी
दर्शयि जिनचरि खगसममनसा ॥ ७ ॥

नरपुरि मरुपुरि भुजगपतिविषये
20 वियुह दशदिशि पुण्यबलमुदीरिताः ।
तत तु भुयु जिनसुत दर्शयि अतुली
जिनसुतप्रभव जिननुपथनिरता ॥ ८ ॥

एकक्षेत्रि अचलित सर्वक्षेत्रविरजा
अनुगत जगहित शशिरिव प्रतिभा ।
25 सर्वघोषहानचित्त प्रशमितमनसा
वियहरि कृतशतश्रुतिपथगिरिभिः ॥ ९ ॥

यत्र सत्त्व हीनचित्त दीन माननिरता-
स्तत्र विदु श्रावकाचरी देशेति वृषभी ।
यत्र सत्त्व तीक्ष्णचित्त प्रत्ययाननिरता-
30 स्तत्र ज्ञान प्रत्ययान दर्शयन्ति विरजा ॥ १० ॥

ये तु सत्त्वहितमैत्रमनसा ( अभिरतास् )
तत्र त्वं(त्वं) जिनपुत्रान दर्शयन्ति चरणम् ।
ये तु सत्त्व अग्र श्रेष्ठ मतिमाननिरता-
स्तत्र अमी बुद्धकाय दर्शयन्ति अतुलम् ॥ ११ ॥

माया यथा मायकारो दर्शेति जगद्धिते
याय कोटि नैकविधा सर्वभावविगता ।
एव विदू बुद्धसुता ज्ञानमायनिरता
दर्शयन्ति सर्वचरी सर्वभावविगता ॥ १२ ॥
एतादृशा रुतसहस्रान् भणित्व मधुरां- 5
स्तदा मरुकन्यका जिनं दृष्ट्वा तूर्णींभूताः ।
पर्षद्विप्रसन्नेयमवोचत्सुगतात्मजम्
अष्टमाया भण ऊर्ध्वं चरिं सद्धर्मराजिनाम् ॥ १३ ॥

उपसंहारगाथाः ।

ते अप्रमाणबलबुद्धि विचारयन्तः 10
सुसूक्ष्मज्ञानपरमा जगता दुर्ज्ञेया ।
तथ गुह्यस्थान सुगतान समोसरन्तो
भूमिं क्रमन्ति नवमीं जगतोऽर्थकरीम् ॥ १४ ॥
ते धारणीमुखि समाधिसमाहिताग्रा
विपुला अभिज्ञा अपि क्षेत्रप्रवेशनन्तम् । 15
बलज्ञाननिश्चयमपि जिनु धैर्यस्थानं
प्रणिधीकृपाशयविदू नवमोतरन्ति ॥ १५ ॥
ते अत्र भूम्यनुगता जिनकोशधारी
कुशलाश्च धर्मकुशलाश्च अव्याकृताश्च ।
ये सास्रवा अपि च लौकिक ये च आर्या- 20
श्चिन्त्या अचिन्तिय विदू अनुबुद्ध्ययन्ति ॥ १६ ॥
नियतांश्च धर्मनियतां प्रविचारयन्ति
त्रययानसंपदक्रियां परितारयन्ति ।
भूमिधर्म यथाअधिमुक्ति प्रचारतश्च
अभिसंस्करोन्ति यथ लोक्य तथोतरन्ति ॥ १७ ॥ 25
ते एवज्ञाननुगता वरसूक्ष्मबुद्धी
सत्त्वान चित्तगहनं परिमार्गयन्ति ।
( चित्तं विचित्रक्षणवर्तनिवर्ततां च )
चित्तं अनन्तप्रभवं सद ओतरन्ति ॥ १८ ॥
क्लेशाननादिन प्रयोगसहायताश्च 30
ये पर्युत्थाननुशया गतिसंधितश्च ।
तथ कर्मप्रवेश विचित्रविभक्तितश्च
हेतू निरुद्धफलनाश समोतरन्ति ॥ १९ ॥

इन्द्रिय या मृदुकमध्य उदारतश्च
संभेदपूर्वमपरान्त समोतरन्ति।
अधिमुक्ति नैक विविधा शुभ आशुभतश्च
चत्वारि आशीति सहस्र समोतरन्ति ॥ २० ॥
धातुप्रवेश जग भावितक्लेशदृष्टी
गहनं गता अनवराग्र अच्छेदतश्च।
ये आशया अनुशया सहजप्रचारी
चित्तासमोसृत निबद्ध अच्छेद तन्ति ॥ २१ ॥
चित्तं यथा अनुशया न च द्रव्यभूतो
न च देशस्था न च विप्रवसन्ति आशया।
दुर्ज्ञेय ध्यानविषयानभिवर्तियाश्च
छेदश्च मार्ग विनयेन न चान्यमस्ति ॥ २२ ॥
उपपत्ति षड्गति विभक्तिप्रवेशतश्च
स्नेहं च तृष्णमविद्यान्धक कर्मक्षेत्रा।
विज्ञानबीजसहजाङ्कुरनामरूपं
त्रैधातुके अनवराग्र समोतरन्ति ॥ २३ ॥
ते वासनागति किलेश च कर्म चित्ता
सुविहारताय न पुनर्गतिसन्त कामा।
राशित्रिभिर्नियतसत्त्व समोतरन्ति
दृष्टीनिमग्नमपि ज्ञान समोतरन्ति ॥ २४ ॥
एवं विसरणगताः स्थित अत्र भूम्यां
सर्वसत्त्व आशय यथेन्द्रिय याधिमुक्तिः।
तेषामर्थे धर्मविभक्ति प्रकाशयन्ति
प्रतिसंविदर्थकुशलाः प्रतिभा निरुक्ति ॥ २५ ॥
ते धर्मभाणक गती अनुप्राप्त ( स्थानं )
सिंहरिषभनिभा गिरिराजकल्पाः।
अभिप्रवर्षन्ति मधुरममृतस्य वर्षं
भुजगेन्द्रसागर यथा अनुपूरयन्ति ॥ २६ ॥
हितार्थज्ञानकुशलास्तथ धर्मतायां
सर्वं निरुक्त्यनुगताः प्रतिभानप्राप्ताः।
ते धारणी दश असंख्यसहस्र लब्धा
धारन्ति धर्म यथ ( सागर वर्षधारी ) ॥ २७ ॥
एवं च धारणिविशुद्धिसमाधिप्राप्ता
एकक्षणेन दशबुद्धसहस्र दृष्टाः।

श्रवणेन धर्मरतनं च निदेशयन्ति
(एकैकमण्डलविशुद्धिस्वराङ्गगताः) ॥ २८ ॥
व्योहारते त्रिसहस्रमहलोकधातुं
परिशेष सत्त्व विविधास्रयरतनेभ्यः ।
तोषेन्ति सर्व यथइन्द्रियआशयाश्च 5
चतुद्वीपसागर वर्षा सम मोदयन्ति ॥ २९ ॥
(भूयोत्तरिं गुणिनु वीर्य समारभन्ते)
चित्तअन्ति वालप्रसर अस्मि सुचेतनन्ताः ।
देशेयु धर्म सुगताः पुन नानसत्त्वं
श्रुत्वा धरेम यथ सर्वद (बीजधारी) ॥ ३० ॥ 10
(यावतका) जगदिह प्रविशन्ति सत्त्वाः
(ते सर्व एकपरिषन्मण्डले निषण्णाश्च) ।
एषां च एकक्षणि सर्वि समोतरित्वा
एकां रुतेन इमि तर्पयितव्य सर्वे ॥ ३१ ॥
(अत्र स्थिता नरमरुत्तम धर्मराजा) 15
भोन्ती धर्मैर्जिनसुताः परिचाल्यन्ति ।
रात्रिंदिवं सद जिनैः शमथानुप्राप्ता
गम्भीर शान्त स्थित ज्ञानविमोक्षधीरा ॥ ३२ ॥
(तेऽनेकबुद्धनियुतान् पर्युपासयन्ते)
भोन्ती उत्तप्त पणु (पाण्डु) चक्रवर्तःप्रभावा । 20
तस्य क्लेशगहनानि प्रभा समाज्य
ब्रह्मणो व द्विसहस्रिकलोकधातुः ॥ ३३ ॥
(अत्र स्थिता गुणधरा) महब्रह्मलोके
भोन्ती (त्रियानदेशनं विदितानुभावा ।)
यं चैवमारभति सर्वजगद्धिताय 25
सर्वज्ञज्ञानुपगता गुणज्ञानप्राप्ता ॥ ३४ ॥
(क्षेत्राप्रमाणपर्योपन्न) एका रजाग्रे
क्षणि एकि (तत्तकसमाधि उ)पेन्ति धीराः ।
(दृष्ट्वा सर्वे दिशि जिनांश्च वचः शृणोन्ति)
ततो विकुर्वि प्रणिधानन्विताप्रमाणाः ॥ ३५ ॥ 30

इत्येषा नवमी भूमिर्महाज्ञानविचारिणा ।
गम्भीरा दुर्दृशा सूक्ष्मा निर्दिष्टा सुगतात्मजाः ॥ ३६ ॥

## १० धर्ममेघा नाम दशमी भूमिः ।

### उपक्रमगाथाः ।

एव श्रुत्व चरणमनुत्तमं
शुद्धवासनयुताः प्रहर्षिताः ।
अन्तरीक्षस्थित प्रीणितेन्द्रियाः
पूजयन्ति सुगतं तथागतम् ॥ १ ॥

बोधिसत्त्वनयुता अचिन्तिया
अन्तरीक्षगतिप्राप्तिहर्षिताः ।
गन्धमेघ अतुलान् मनोमयान्
धूपयन्ति सत्त्वक्लेशघातिनः ॥ २ ॥

देवराज वशवर्ति प्रीणितो
अन्तरीक्ष त्रिसहस्रकोटिभिः ।
वस्त्रकैः समकरी सगौरवा
भ्रामयन्ति रुचिरान् वरान् शतम् ॥ ३ ॥

अप्सरा बहव प्रीणितेन्द्रियाः
पूजयन्ति सुगतं सगौरवाः ।
तूर्यकोटिनयुताः प्रवादिता
एवरूप रवुयुक्त रावतः ॥ ४ ॥

एकक्षेत्र सुगतो निषण्णकः
सर्वक्षेत्रि प्रतिभास दर्शयी ।
कायकोटि विविधा मनोरमा
धर्मधातुविपुलान् स्फरित्विन ॥ ५ ॥

एकरोमु सुगतस्य रश्मयो
निश्चरन्ति जगक्लेश शाम्यति ।
शक्यु ( क्षेत्र—रज—धातुऽपि ) क्षयी
तस्य रश्मिगणना त्वजानितुम् ॥ ६ ॥

केचि बुद्धवरलक्षणं विदुः
पश्ययन्ति वरचक्रवर्तिनः ।
अन्यक्षेत्रवरचर्य उत्तमां
शोधयन्ति द्विपदेन्द्र दृश्यते ॥ ७ ॥

( तुषितायतनप्राप्त नायको )
च्यवमानु चंक्रमाण दृश्यते ।

गर्भप्राप्त बहुक्षेत्रकोटिषु
जायमान क्वचि क्षेत्र दृश्यते ॥ ८ ॥
निष्क्रमन्त जगहेतु नायको
बुध्यमान पुन बोधिमुत्तमाम् ।
( धर्मचक्रवर्तनिर्वृतागतो ) 5
दृश्यमान बुद्धक्षेत्रकोटिषु ॥ ९ ॥
मायकार यथ विद्यशिक्षितो
जीविकार्थ बहुकाय दर्शयी ।
तद्व शास्तु वरप्रज्ञशिक्षितो
सर्वकायभिनिर्हर्तु ( सत्त्वन ) ॥ १० ॥ 10
शून्य शान्त गतधर्मलक्षणा
अन्तरीक्षसमप्राप्तधर्मताम् ।
बुद्धशास्तु परमार्थतत्त्वतं
दर्शयी प्रवरबुद्धगोचरम् ॥ ११ ॥
यथ स्वभावु सुगर्तानगोचरा 15
सर्वसत्त्व तथ प्राप्त धर्मताम् ।
लक्षलक्ष समलक्ष तादृशा
सर्वधर्म परमार्थलक्षणाः ॥ १२ ॥
ये तु ज्ञान सुगतान अर्थिके
कल्पकल्पपरिकल्पवर्जितम् । 20
भावभावसमभावबुद्धयः
क्षिप्र भेष्यति नरेश उत्तमाः ॥ १३ ॥
ईदृशान् रुतसहस्रान् भणित्व मधुरस्वराः ।
मरुकन्या जिनं लोक्य तूष्णीभूताः शमे रताः ॥ १४ ॥
प्रसन्नं पर्षदं ज्ञात्वा मोक्षचन्द्रो विशारदः । 25
वज्रगर्भं त्रिधापृच्छज्जिनपुत्रं विशारदम् ॥ १५ ॥
दशमी संक्रमन्तानां कीदृशं गुणगोचरम् ।
निमित्तप्रातिहार्यांश्च सर्वमाख्या( हि ) परिक्रम ॥ १६ ॥

अथ खलु वज्रगर्भो बोधिसत्त्वो दशदिशं व्यवलोक्य सर्वावतीं पर्षदं व्यवलोक्य धर्मधातुं च व्यवलोकयन् सर्वज्ञताचित्तोत्पादं च संवर्णयन् बोधिसत्त्वविषयमादर्शयन् 30 चर्याबलं परिशोधयन् सर्वाकारज्ञतासंग्रहमनुव्याहरन् सर्वलोकमलमपकर्षयन् सर्वज्ञज्ञानमुपसंहरन् अचिन्त्यज्ञाननिर्यूहमादर्शयन् बोधिसत्त्वगुणान् प्रभावयन् एवमेव भूम्यर्थं प्ररूपयमाणो बुद्धानुभावेन तस्यां वेलायामिमा गाथा अभाषत—

## उपसंहारगाथाः।

शमदमनिरतानां शान्तदान्ताशयानां
खगपथसदृशानामन्तरीक्षसमानाम्।
खिलमलविधुतानां मार्गज्ञाने स्थितानां
शृणुत चरिविशेषान् बोधिसत्त्वान श्रेष्ठान्॥ १७॥ 5
कुशलशतसहस्रं संचिया कल्पकोट्या
बुद्धशतसहस्रान् पूजयित्वा महर्षीन्।
प्रत्ययजिनवशींश्चापूजयित्वा अनन्तान्
सर्वजगतहिताया जायते बोधिचित्तम्॥ १८॥

10 व्रततपतपितानां क्षान्तिपारंगतानां
हिरिशिरिचरितानां पुण्यज्ञानोद्गतानाम्।
विपुलगतिमतीनां बुद्धज्ञानाशयानां
दशबलसमतुल्यं जायते बोधिचित्तम्॥ १९॥

यावं जिन त्रियध्वा पूजनार्थाय पूजं
15 खगपथपरिणामं शोधनं सर्वक्षेत्रम्।
सम्यगनुगतार्थे यावता सर्वधर्मान्
मोक्ष जगत अर्थे जायते बोधिचित्तम्॥ २०॥

प्रमुदितसुमतीनां दानधर्मारतानां
सकलजगहितार्थे नित्यमेवोद्यतानाम्।
20 जिनगुणनिरतानां सत्त्वरक्षाव्रतानां
त्रिभुवनहितकार्ये जायते बोधिचित्तम्॥ २१॥

अकुशलविरतानां शुद्धशीलाव्रतानां
व्रतनियमरतानां शान्तसौम्येन्द्रियाणाम्।
जिनशरणगतानां बोधिचर्याशयानां
25 त्रिभुवनहितसाध्यं जायते बोधिचित्तम्॥ २२॥

अनुगतकुशलानां क्षान्तिसौरत्यभाजां
विदितगुणरसानां त्यक्तमानोत्सवानाम्।
निहितशुभमतीनां दान्तसौम्याशयानां
सकलहितविधाने जायते बोधिचित्तम्॥ २३॥

30 प्रचलितशुभकार्या धीरवीर्योत्सहा ये
निखिलजनहितार्थे प्रोद्यमाना सिंहाः।

अविरतगुणसाध्या निर्जितक्लेशसंघा
झटिति मनसि तेषां जायते बोधिचित्तम् ॥ २४ ॥

सुसमवहितचित्ता ध्वस्तमोहान्धकारा
विगलितमदमाना त्यक्तसंक्लिष्टमार्गाः ।
शमसुखनिरता ये त्यक्तसंसारसङ्गा 5
झटिति मनसि तेषां जायते बोधिचित्तम् ॥ २५ ॥

विमलखसमचित्ता ज्ञानविज्ञानविज्ञा
निहतनमुचिमारा वान्तक्लेशाभिमानाः ।
जिनपदशरणस्था लब्धतत्त्वार्थका ये
सपदि मनसि तेषां जायते बोधिचित्तम् ॥ २६ ॥ 10

त्रिभुवनशिवसाध्योपायविज्ञानधीराः
कलिबलपरिहारोपायविद्यर्द्धिमन्तः ।
सुगतगुणसमीहा ये च पुण्यानुरागाः
सपदि मनसि तेषां जायते बोधिचित्तम् ॥ २७ ॥

त्रिभुवनहितकामा बोधिसंभारपूर्यै 15
प्रणिहितमनसा ये दुष्करेऽपि चरन्ति ।
अविरतशुभकर्मप्रोद्यता बोधिसत्त्वाः
सपदि मनसि तेषां जायते बोधिचित्तम् ॥ २८ ॥

दशबलगुणकामा बोधिचर्यानुरक्ता
विजितकलिबलौघास्त्यक्तमानानुषङ्गाः । 20
अनुगतशुभमार्गा लब्धधर्मार्थकामा
झटिति मनसि तेषां जायते बोधिचित्तम् ॥ २९ ॥

इति गणितगुणांशा बोधिचर्याश्चरन्तु
जिनपदप्रणिधानाः सत्समृद्धिं लभन्तु ।
त्रिगुणपरिविशुद्धा बोधिचित्तं लभन्तु 25
त्रिशरणपरिशुद्धा बोधिसत्त्वा भवन्तु ॥ ३० ॥

दश पारमिताः पूर्य दशभूमीश्वरो भवेत् ।
भूयोऽपि कथ्यते ह्येतच्छृणुतैवं समासतः ॥ ३१ ॥

बोधिचित्तं यदासाव संप्रदानं करोति यः ।
तदा प्रमुदितां प्राप्तो जम्बूद्वीपेश्वरो भवेत् ॥ ३२ ॥ 30

तत्रस्थः पालयन् सत्त्वान् यथेच्छाप्रतिपादनैः।
स्वयं दाने प्रतिष्ठित्वा परांश्चापि नियोजयेत्॥ ३३॥

सर्वान् बोधौ प्रतिष्ठाप्य संपूर्णा दानपारगः।
एतद्धर्मानुभावेन संवरं समुपाचरेत्॥ ३४॥

5 सम्यक्शीलं समाधाय संवरकुशली भवेत्।
ततः स विमलां प्राप्तश्चातुर्द्वीपेश्वरो भवेत्॥ ३५॥

तत्रस्थः पालयन् सत्त्वान् अकुशलनिवारणैः।
स्वयं शीले प्रतिष्ठित्वा परांश्चापि नियोजयेत्॥ ३६॥

सर्वान् बोधौ प्रतिष्ठाप्य संपूर्णशीलपारगः।
10 एतद्धर्मविपाकेन क्षान्तिव्रतमुपाश्रयेत्॥ ३७॥

सम्यक्क्षान्तिव्रतं धृत्वा क्षान्तिभृत्कुशली भवेत्।
ततः प्रभाकरीप्राप्तस्त्रयस्त्रिंशाधिपो भवेत्॥ ३८॥

तत्रस्थः पालयन् सत्त्वान् क्लेशमार्गनिवारणैः।
स्वयं क्षान्तिव्रते स्थित्वा परांश्चापि नियोजयेत्॥ ३९॥

15 सत्त्वान् बोधौ प्रतिष्ठाप्य क्षान्तिपारंगतो भवेत्।
एतत्पुण्यविपाकैः स वीर्यव्रतमुपाश्रयेत्॥ ४०॥

सम्यग्वीर्यं समाधाय वीर्यभृत् कुशली भवेत्।
ततश्चार्चिष्मतीप्राप्तः सुयामाधिपतिर्भवेत्॥ ४१॥

तत्रस्थः पालयन् सत्त्वान् कुदृष्टिसंनिवारणैः।
20 सम्यग्दृष्टौ प्रतिष्ठाप्य बोधयित्वा प्रयत्नतः॥ ४२॥

स्वयं वीर्यव्रते स्थित्वा परांश्चापि नियोजयेत्।
सर्वान् बोधौ प्रतिष्ठाप्य वीर्यपारंगतो भवेत्॥ ४३॥

एतत्पुण्यविपाकैश्च ध्यानव्रतं समाश्रयेत्।
सर्वक्लेशान् विनिर्जित्य समाधिसुस्थितो भवेत्॥ ४४॥

25 सम्यग् ध्यानं समाधाय समाधिकुशली भवेत्।
ततः सुदुर्जयाप्राप्तः संतुषिताधिपो भवेत्॥ ४५॥

तत्रस्थः पालयन् सत्त्वान् तीर्थ्यमार्गनिवारणैः।
सत्यधर्मे प्रतिष्ठाप्य बोधयित्वा प्रयत्नतः॥ ४६॥

स्वयं ध्यानव्रते स्थित्वा परांश्चापि नियोजयेत्।
30 सर्वान् बोधौ प्रतिष्ठाप्य ध्यानपारंगतो भवेत्॥ ४७॥

एतत्पुण्यविपाकैश्च प्रज्ञाव्रतमुपाश्रयेत् ।
सर्वमारान् विनिर्जित्य प्रज्ञाभिज्ञसमृद्धिमान् ॥ ४८ ॥

सम्यक्प्रज्ञां समाधाय स्वभिज्ञाकुशली भवेत् ।
ततश्चाभिमुखीप्राप्तः सुनिर्मिताधिपो भवेत् ॥ ४९ ॥

तत्रस्थः पालयन् सत्त्वान् अभिमाननिवारणैः ।　　5
शून्यतासु प्रतिष्ठाप्य बोधयित्वा प्रयत्नतः ॥ ५० ॥

स्वयं प्रज्ञाव्रते स्थित्वा परांश्चापि नियोजयेत् ।
सर्वान् बोधौ प्रतिष्ठाप्य प्रज्ञापारंगतो भवेत् ॥ ५१ ॥

एतत्पुण्यविपाकैश्च स सुपायव्रतं चरेत् ।
सर्वदुष्टान् विनिर्जित्य सद्धर्मकुशली भवेत् ॥ ५२ ॥　　10

स सुपायविधानेन सत्त्वान् बोधौ नियोजयेत् ।
ततो दूरंगमाप्राप्तो वशवर्तीश्वरो भवेत् ॥ ५३ ॥

तत्रस्थः पालयन् सत्त्वानभिसमयबोधनैः ।
बोधिसत्त्वनियामेषु प्रतिष्ठाप्य प्रबोधयन् ॥ ५४ ॥

तत्रोपाये स्वयं स्थित्वा परांश्चापि नियोजयेत् ।　　15
सर्वान् बोधौ प्रतिष्ठाप्य ह्युपायपारगो भवेत् ॥ ५५ ॥

एतत्पुण्यानुभावैश्च सुप्रणिधिमुपाश्रयेत् ।
मिथ्यादृष्टिं विनिर्जित्य सम्यग्दृष्टिकृती बुधः ॥ ५६ ॥

सुप्रणिहितचित्तेन सम्यग्बोधौ प्रतिष्ठितः ।
ततश्चाप्यचलाप्राप्तो ब्रह्मा साहस्रिकाधिपः ॥ ५७ ॥　　20

तत्रस्थः पालयन् सत्त्वान् त्रियानसंप्रवेशनैः ।
लोकधातुपरिज्ञाने प्रतिष्ठाप्य प्रबोधयन् ॥ ५८ ॥

सुप्रणिधौ स्वयं स्थित्वा परांश्चापि नियोजयेत् ।
सर्वान् बोधौ प्रतिष्ठाप्य प्रणिधिपारगो भवेत् ॥ ५९ ॥

एतत्पुण्यानुसारैश्च बलव्रतमुपाश्रयेत् ।　　25
सर्वदुष्टान् विनिर्जित्य संबोधौ कृतनिश्चयः ॥ ६० ॥

सम्यग्बलसमुत्साहैः सर्वतीर्थ्यान् विनिर्जयेत् ।
ततः साधुमतीप्राप्तो महाब्रह्मा भवेत् कृती ॥ ६१ ॥

तत्रस्थः पालयन् सत्त्वान् बुद्धयानोपदर्शनैः ।
सत्त्वाशयपरिज्ञाने प्रतिष्ठाप्य प्रबोधयन् ॥ ६२ ॥　　30

स्वयं बले प्रतिष्ठित्वा परांश्चापि नियोजयेत् ।
सर्वान् बोधौ प्रतिष्ठाप्य बलपारंगतो भवेत् ॥ ६३ ॥

एतत्पुण्यविपाकैश्च ज्ञानव्रतमुपाश्रयेत् ।
चतुर्मारान् विनिर्जित्य बोधिसत्त्वो गुणाकरः ॥ ६४ ॥

5 सम्यग् ज्ञानं समासाद्य सद्धर्मकुशली भवेत् ।
धर्ममेघां ततः प्राप्तो महेश्वरो भवेत् कृती ॥ ६५ ॥

तत्रस्थः पालयन् सत्त्वान् सर्वाकारानुबोधनैः ।
सर्वाकारवरे ज्ञाने प्रतिष्ठाप्य प्रबोधयन् ॥ ६६ ॥

स्वयं ज्ञाने प्रतिष्ठित्वा परांश्चापि नियोजयेत् ।
10 सर्वान् बोधौ प्रतिष्ठाप्य ज्ञानपारंगतो भवेत् ॥ ६७ ॥

एतत्पुण्यानुभावैश्च दशभूमीश्वरो जिनः ।
सर्वाकारगुणाधारः सर्वज्ञो धर्मराड् भवेत् ॥ ६८ ॥

इति मत्वा भवद्भिश्च संबोधिपदलब्धये ।
दशपारमितापूर्यै चरितव्यं समाहितैः ॥ ६९ ॥

15 तथा बोधिं शिवां प्राप्य चतुर्मारान् विजित्य च ।
सर्वान् बोधौ प्रतिष्ठाप्य निर्वृतिं समवाप्स्यथ ॥ ७० ॥

एतच्छ्रुत्वा परिज्ञाय चरध्वं बोधिसाधने ।
निर्विघ्नं बोधिमासाद्य लभध्वं सौगतां गतिम् ॥ ७१ ॥



## ११ परीन्दनापरिवर्तः ।

### उपक्रमः ।

एतास्ताः खलु पुनर्भो जिनपुत्रा दश बोधिसत्त्वभूमयः समासतो निर्दिष्टाः सर्वाकारवरोपेतसर्वज्ञज्ञानानुगता द्रष्टव्याः। तस्यां वेलायामयं त्रिसाहस्रमहासाहस्रो लोकधातुः षड्विकारं प्राकम्पत् । विविधानि च पुष्पाणि वियतो न्यपतन् । दिव्यमानुष्यकानि च तूर्याणि संप्रवादितान्यभूवन् । अनुमोदनाशब्देन च यावदकनिष्ठभुवनं विज्ञप्तमभूत् ॥ 5

अथ तस्मिन् समये भगवांस्तान् विमुक्तिचन्द्रप्रमुखान् सर्वान् बोधिसत्त्वानामन्त्र्य एवमादिशत्—इमामहं मार्षा असंख्येयकल्पकोटीनयुतशतसहस्रसमुदानीतामनुत्तरां सम्यक्संबोधिं युष्माकं हस्ते परिन्दामि अनुपरिन्दामि परमया परिन्दनया । तद्यूयं सर्वे स्वयं चैवमिमं धर्मपर्यायं धारयत, परेभ्यश्च विस्तरेण संप्रकाशयत । संक्षेपान्मार्षा यदि तथागतः कल्पस्थितिकेनायुःप्रमाणेन रात्रिंदिवमधितिष्ठमानोऽस्य धर्मपर्यायस्य वर्णं भाषते, नैवास्य धर्मपर्यायस्य वर्णपर्यन्तो भवेत्, न च तथागतप्रतिभानक्षयो भवेत् । यथा तथागतशीलसमाधिप्रज्ञाविमुक्तिज्ञानदर्शनमप्रमाणमपर्यन्तम्, एवमेव मार्षा य इमं धर्मपर्यायमुद्ग्रहीष्यति धारयिष्यति वाचयिष्यति लिखिष्यति लिखापयिष्यति पर्यवाप्स्यति प्रवर्तयिष्यति, पर्षन्मध्ये च विस्तरेण संप्रकाशयिष्यति—अनेन चित्तेन कथममी सत्त्वा एवमुदारधर्मस्य लाभिनः स्युरिति श्रद्धया सत्कृत्य श्रावयिष्यन्ति श्रोष्यन्ति च योनिशो मनसि भावयिष्यन्ति च । पुस्तकलिखितं कृत्वा गृहे धारयिष्यति सत्करिष्यति गुरुकरिष्यति मानयिष्यति पूजयिष्यति । अमात्सर्यचित्ततया अस्य धर्मपर्यायस्य वर्णं भाषित्वा लिखनाय वाचनाय स्वाध्ययनाय पूजनाय दर्शनाय दास्यति, तेषामपि नास्ति पुण्यपर्यन्तः ॥ 10 15

अथ खलु भगवानस्यैव धर्मपर्यायस्य भूयस्या मात्रया अनुपरिन्दनार्थं तस्यां वेलायामिमा गाथा अभाषत— 20

सत्त्वा दृष्टा ये मया बुद्धदृष्ट्या
तेऽर्हन्तः स्युः शारिपुत्रेण तुल्याः ।
तां चेत्कश्चित्पूजयेत्कल्पकोट्या
तुल्यान् गङ्गावालुकाभिर्यथैव ॥ १ ॥ 25

प्रत्येकबुद्धाय तु यश्च पूजां
कुर्यादहोरात्रमपि प्रहृष्टः ।
माल्यप्रकारैश्च तथाम्बरैश्च
तस्मादयं पुण्यकृतो विशिष्टः ॥ २ ॥

सर्वेऽपि प्रत्येकजिना यदि स्यु- 30
स्तान् पूजयेत् कश्चिदिहाप्रमत्तः ।

पुष्पैश्च गन्धैश्च विलेपनैश्च
 कल्पाननेकान् शयनान्नपानैः ॥ ३ ॥
एकस्य यश्चैव तथागतस्य
 कुर्यात् प्रणाममपि चैकवारम्।
प्रसन्नचित्तोऽथ वदेन्नमोऽर्हन्
 तस्मादिदं श्रेष्ठतरं च पुण्यम् ॥ ४ ॥
बुद्धा भवेयुर्यदि सर्वसत्त्वा-
 स्तान् पूजयेत् यश्च यथैव पूर्वम्।
दिव्यैश्च पुष्पैरथ मानुषैश्च
 कल्पाननेकान् बहुभिः प्रकारैः ॥ ५ ॥
यश्चैव सद्धर्मविलोपकाले
 त्यक्त्वा स्वकायं च तथात्मजीवम्।
दद्यादहोरात्रमिदं हि सूत्रं
 विशिष्यते पुण्यमिदं हि तस्मात् ॥ ६ ॥
यस्येप्सितं पूजयितुं जिनेन्द्रान्
 प्रत्येकबुद्धानपि श्रावकांश्च।
दृढं समुत्पाद्य स बोधिचित्तम्
 इदं सदा सूत्रवरं ददातु ॥ ७ ॥
राजा ह्ययं सर्वसुभाषितानां
 सोऽभ्युद्गतः सर्वतथागतानाम्।
गृहे स्थितस्तस्य तथागतः स
 तिष्ठेदिदं यत्र हि सूत्ररत्नम् ॥ ८ ॥
प्रभां स प्राप्नोति शुभामनन्ताम्
 एकं पदं वादि शतीह यश्च।
न व्यञ्जनाद् भ्रस्यति नापि चार्थाद्
 ददाति यः सूत्रमिदं परेभ्यः ॥ ९ ॥
अनुत्तरासौ नरनायकानां
 सत्त्वो न कश्चित् सदृशोऽस्य विद्यते।
भवेत्समुद्रेण समश्च सोऽक्षयः
 श्रुत्वा हि यो धर्ममिमं प्रपद्यते ॥ १० ॥



## प्रथमं परिशिष्टम् ।

### मैत्रेयनाथविरचितादभिसमयालंकारादुद्धृता दशभूमिनिरुक्तिः ।

(१) लभ्यते प्रथमा भूमिर्दशधा परिकर्मणा ।
आशयो हितवस्तुत्वं सत्त्वेषु समचित्तता ॥ ४९ ॥
त्यागः सेवा च मित्राणां सद्धर्मालम्बनैषणा । 5
सदा नैष्क्रम्यचित्तत्वं बुद्धकायगता स्पृहा ॥ ५० ॥
धर्मस्य देशना सत्यं दशमं वाक्यमिष्यते ।
ज्ञेयं च परिकर्मैषां स्वभावानुपलम्भतः ॥ ५१ ॥

(२) शीलं कृतज्ञता क्षान्तिः प्रामोद्यं महती कृपा ।
गौरवं गुरुशुश्रूषा वीर्यं दानादिकेऽष्टमम् ॥ ५२ ॥ 10

(३) अतृप्तता श्रुते दानं धर्मस्य च निरामिषम् ।
बुद्धक्षेत्रस्य संशुद्धिः संसारापरिखेदिता ॥ ५३ ॥
ह्रीरपत्राप्यमित्येतत् पञ्चधा मननात्मकम् ।

(४) वनाशाल्पेच्छता तुष्टिर्धूतसंलेखसेवनम् ॥ ५४ ॥
शिक्षाया अपरित्यागः कामानां विजुगुप्सनम् । 15
निर्वित्सर्वास्तिसंत्यागोऽनवलीनानपेक्षते ॥ ५५ ॥

(५) संस्तवं कुलमात्सर्यं स्थानं संगणिकावहम् ।
आत्मोत्कर्षपरावज्ञे कर्ममार्गान् दशाशुभान् ॥ ५६ ॥
मानं स्तम्भं विपर्यासं विमतिं क्लेशमर्षणम् ।
विवर्जयन् समाप्नोति दशैतान् पञ्चमीं भुवम् ॥ ५७ ॥ 20

(६) दानशीलक्षमावीर्यध्यानप्रज्ञाप्रपूरणात् ।
शिष्यखड्गस्पृहात्रासचेतसां परिवर्जकः ॥ ५८ ॥
याचितोऽनवलीनश्च सर्वत्यागेऽप्यदुर्मनाः ।
कृशोऽपि नार्थिनां क्षेप्ता षष्ठीं भूमिं समश्नुते ॥ ५९ ॥

(७) आत्मसत्त्वग्रहो जीवपुद्गलोच्छेदशाश्वतः । 25
निमित्तहेत्वोः स्कन्धेषु धातुष्वायतनेषु च ॥ ६० ॥
त्रैधातुके प्रतिष्ठानं सक्तिरालीनचित्तता ।
रत्नत्रितयशीलेषु तद्दृष्ट्यभिनिवेशिता ॥ ६१ ॥
शून्यतायां विवादश्च तद्विरोधश्च विंशतिः ।
कलङ्का यस्य विच्छिन्नाः सप्तमीमेत्यसौ भुवम् ॥ ६२ ॥ 30

त्रिविमोक्षमुखज्ञानं त्रिमण्डलविशुद्धता ।
करुणा मनना धर्मसमतैकनयज्ञता ॥ ६३ ॥
अनुत्पादक्षमाज्ञानं धर्माणामेकधेरणा ।
कल्पनायाः समुद्घातः संज्ञादृक्क्लेशवर्जनम् ॥ ६४ ॥
5 शमथस्य च निष्पत्तिः कौशलं च विदर्शने ।
चित्तस्य दान्तता ज्ञानं सर्वत्राप्रतिघाति च ॥ ६५ ॥
सक्तेरभूमिर्यत्रेच्छं क्षेत्रान्तरगतिः समम् ।
सर्वत्र स्वात्मभावस्य दर्शनं चेति विंशतिः ॥ ६६ ॥
(८) सर्वसत्त्वमनोज्ञानमभिज्ञाक्रीडनं शुभा ।
10 बुद्धक्षेत्रस्य निष्पत्तिर्बुद्धसेवापरीक्षणे ॥ ६७ ॥
अक्षज्ञानं जिनक्षेत्रशुद्धिर्मायोपमा स्थितिः ।
संचिन्त्य च भवादानमिदं कर्माष्टधोदितम् ॥ ६८ ॥
(९) प्रणिधानान्यनन्तानि देवादीनां रुतज्ञता ।
नदीव प्रतिभानानां गर्भावक्रान्तिरुत्तमा ॥ ६९ ॥
15 कुलजात्योश्च गोत्रस्य परिवारस्य जन्मनः ।
नैष्क्रम्यबोधिवृक्षाणां गुणपूरेश्च संपदः ॥ ७० ॥
(१०) नवभूमीरतिक्रम्य बुद्धभूमौ प्रतिष्ठते ।
येन ज्ञानेन सा ज्ञेया दशमी बोधिसत्त्वभूः ॥ ७१ ॥



## द्वितीयं परिशिष्टम् ।

### पञ्चविंशतिसाहस्रिकाप्रज्ञापारमितोद्धृतो भूमिसंभारः ।

इह सुभूते बोधिसत्त्वो महासत्त्वः षट्सु पारमितासु चरन् भूमेर्भूमिं संक्रामति । कथं च सुभूते बोधिसत्त्वो महासत्त्वो भूमेर्भूमिं संक्रामति ? यदुत असंक्रान्त्या सर्वधर्माणाम् । तत्कस्य हेतोः ? न हि स कश्चिद्धर्मो य आगच्छति वा गच्छति वा संक्रामति वा उपसंक्रामति वा । अपि तु या धर्माणां भूमिः, तां न मन्यते न चिन्तयति, भूमिपरिकर्म च करोति, न च भूमिं समनुपश्यति ॥ 5

कतमच्च बोधिसत्त्वस्य महासत्त्वस्य भूमिपरिकर्म ? प्रथमायां भूमौ वर्तमानेन बोधिसत्त्वेन महासत्त्वेन दश भूमिपरिकर्माणि करणीयानि । कतमानि दश ? अध्याशयपरिकर्म अनुपलम्भयोगेन । हितवस्तुतापरिकर्म निमित्ततानुपलम्भतामुपादाय । सर्वसत्त्वसमचित्ततापरिकर्म सत्त्वानुपलब्धितामुपादाय । त्यागपरिकर्म दायकदेयपरिग्राहकानुपलब्धितामुपादाय । कल्याणमित्रसेवापरिकर्म तैरसंस्तापनतामुपादाय । सद्धर्मपर्येष्टिपरिकर्म सर्वधर्मानुपलब्धितामुपादाय । अभीक्ष्णं नैष्क्रम्यपरिकर्म गृहानुपलब्धितामुपादाय । बुद्धकायस्पृहापरिकर्म लक्षणानुव्यञ्जननिमित्तानुपलब्धितामुपादाय । धर्मविवरणपरिकर्म धर्मभेदानुपलब्धितामुपादाय । सत्यवचनपरिकर्म वचनानुपलब्धितामुपादाय । इमानि सुभूते बोधिसत्त्वानां महासत्त्वानां प्रथमाया भूमेर्दश परिकर्माणि, यानि प्रथमायां भूमौ वर्तमानेन बोधिसत्त्वेन महासत्त्वेन दश परिकर्माणि करणीयानि ॥ 10 15

पुनरपरं सुभूते बोधिसत्त्वो महासत्त्वो द्वितीयायां भूमौ वर्तमानोऽष्टौ धर्मान् मनसि करोति, तेषु च प्रतिपद्यते । कतमानष्टौ ? यदुत शीलविशुद्धिं कृतज्ञतां कृतवेदितां क्षान्तिबलप्रतिष्ठानं प्रामोद्यप्रत्यनुभवतां सर्वसत्त्वापरित्यागितया महाकरुणायामामुखीकर्म गुरूणां श्रद्धया गौरवं शास्तृसंज्ञया गुरुशुश्रूषां पारमितास्तद्योगपर्येष्टिम् । इमान् सुभूते बोधिसत्त्वेन महासत्त्वेन द्वितीयायां भूमौ वर्तमानेन अष्टौ धर्मान् मनसिकृत्वा प्रतिपत्तव्यम् ॥ 20

पुनरपरं सुभूते बोधिसत्त्वेन महासत्त्वेन तृतीयायां भूमौ वर्तमानेन पञ्चसु धर्मेषु स्थातव्यम् । कतमेषु पञ्चसु ? यदुत बाहुश्रुत्ये अतृप्ततायां तत्र चाक्षरानभिनिवेशे निरामिषधर्मदानविवरणतायां तया चामन्यनतया, बुद्धक्षेत्रपरिशोधनकुशलमूलपरिणामनतायाम्, तया चामन्यनतया अमितसंसारापरिखेदनतायाम्, तया चामन्यनतया ह्रीरपत्राप्यन्यवस्थाने, तेन चामन्यनतया । एषु सुभूते बोधिसत्त्वेन महासत्त्वेन पञ्चसु धर्मेषु तृतीयायां भूमौ वर्तमानेन स्थातव्यम् ॥ 25

१ This extract is taken from *Pañcaviṁśatisāhasrikā Prajñāpāramitā*, pp. 214–235, edited by Dr Nalinaksa Dutt, Calcutta, 1934. The text as printed in this edition is abbreviated too much, but I have given here a full text.

पुनरपरं सुभूते बोधिसत्त्वेन महासत्त्वेन चतुर्थ्यां भूमौ वर्तमानेन दशसु धर्मेषु स्थातव्यम्, ते च न परित्यक्तव्याः। कतमेषु दशसु? यदुत अरण्यवासोऽल्पेच्छता संतुष्टिर्धूतगुणसंलेखानुत्सर्जनं शिक्षाया अपरित्यागः कामगुणविजुगुप्सनं निर्वित्सहगतश्चित्तोत्पादः सर्वास्तिपरित्यागिता अनवलीनचित्ततया सर्ववस्तुनिरपेक्षता। इमे सुभूते दश धर्मा बोधि-
5 सत्त्वेन महासत्त्वेन चतुर्थ्यां भूमौ वर्तमानेन न परित्यक्तव्याः, एषु च स्थातव्यम्॥

पुनरपरं सुभूते बोधिसत्त्वेन महासत्त्वेन पञ्चम्यां भूमौ वर्तमानेन दश धर्माः परिवर्जयितव्याः। कतमे दश? यदुत गृहिप्रव्रजितसंस्तवः परिवर्जयितव्यः। कुलमात्सर्यपरिकर्म। संगणिकास्थानं परिकर्म। आत्मोत्कर्षणं परिकर्म। परपंसनं परिकर्म। दशाकुशलाः कर्मपथाः परिकर्म। अधिमानस्तम्भौ परिकर्म। विपर्यासाः परिकर्म। विचिकित्सा
10 परिकर्म। रागद्वेषमोहाधिवासनाः परिकर्म। इमे सुभूते दश धर्मा बोधिसत्त्वेन महासत्त्वेन पञ्चम्यां भूमौ वर्तमानेन परित्यक्तव्याः, परिवर्जयितव्याः॥

पुनरपरं सुभूते बोधिसत्त्वेन महासत्त्वेन षष्ठ्यां भूमौ वर्तमानेन षड् धर्माः परिपूरयितव्याः। कतमे षट्? यदुत षट् पारमिताः परिपूरयितव्याः। अपरे षड् धर्माः परिवर्जयितव्याः। कतमे षट्? श्रावकचित्तं परिवर्जयितव्यम्। प्रत्येकबुद्धचित्तं परिवर्जयितव्यम्।
15 परितसनाचित्तं परिवर्जयितव्यम्। याचनकं दृष्ट्वा नावलीयते। सर्ववस्तूनि च त्याज्यानि, न च दौर्मनस्यचित्तमुत्पादयितव्यम्, न च याचनकविक्षेपः कर्तव्यः। इमे सुभूते षड् धर्मा बोधिसत्त्वेन महासत्त्वेन षष्ठ्यां भूमौ वर्तमानेन परिपूरयितव्याः। अपरे षड् धर्माः परिवर्जयितव्याः॥

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य सप्तम्यां भूमौ वर्तमानस्य विंशतिर्धर्मा न
20 भवन्ति। कतमे विंशतिः? यदुत आत्मग्राहोऽस्य न भवति सत्त्वग्राहो जीवग्राहः पुद्गलग्राह उच्छेदग्राहः शाश्वतग्राहः। निमित्तसंज्ञा हेतुदृष्टिः स्कन्धाभिनिवेशो धात्वभिनिवेशः। आयतनमृद्धिस्त्रैधातुके प्रतिष्ठानं त्रैधातुकाध्यवसानं त्रैधातुके आलयो बुद्धनिश्रयदृष्ट्यभिनिवेशो धर्मनिश्रयदृष्ट्यभिनिवेशः संघनिश्रयदृष्ट्यभिनिवेशः शीलनिश्रयदृष्ट्यभिनिवेशः शून्या धर्मा इति विवादः। शून्यताविरोधश्चास्य न भवति। इमे सुभूते विंशतिर्धर्मा
25 बोधिसत्त्वस्य महासत्त्वस्य सप्तम्यां भूमौ वर्तमानस्य न भवन्ति। तेन विंशतिरेव धर्माः सप्तम्यां भूमौ स्थितेन परिपूरयितव्याः। कतमे विंशतिः? यदुत शून्यतापरिपूरिता निमित्तसाक्षात्क्रिया अप्रणिहितज्ञानं त्रिमण्डलपरिशुद्धिः कृपाकारुण्यं च सर्वसत्त्वेषु, तेष्वनवमन्यना, सर्वधर्मसमतादर्शनं तत्र चानभिनिवेशः। भूतनयप्रतिवेधत्वेन चामन्यना, अनुत्पादक्षान्तिरनुत्पादज्ञानमेकनयनिर्देशः। सर्वधर्माणां कल्पनासमुद्घातः। संज्ञादृष्टिविवर्तः
30 क्लेशविवर्तः शमथनिध्यप्तिः विपश्यनाकौशल्यं दान्तचित्तता सर्वत्राप्रतिहतज्ञानचित्तता अननुनयस्याभूमिः यत्रेच्छाक्षेत्रगमनं तत्र च बुद्धपर्षन्मण्डले स्थित्वा आत्मभावसंदर्शनम्। इमे विंशतिर्धर्मा बोधिसत्त्वेन महासत्त्वेन सप्तम्यां भूमौ वर्तमानेन परिपूरयितव्याः॥

पुनरपरं सुभूते बोधिसत्त्वेन महासत्त्वेन अष्टम्यां भूमौ वर्तमानेन चत्वारो धर्माः परिपूरयितव्याः। कतमे चत्वारः? यदुत सर्वसत्त्वचित्तानुप्रवेशोऽभिज्ञाविक्रीडनं बुद्धक्षेत्र-दर्शनं तेषां च बुद्धक्षेत्राणां यथादृष्टिनिष्पादनता बुद्धपर्युपासनता बुद्धकाययथाभूतप्रत्य-वेक्षणता। इमे सुभूते चत्वारो धर्मा बोधिसत्त्वेन महासत्त्वेन अष्टम्यां भूमौ वर्तमानेन परिपूर-यितव्याः। पुनरपरं सुभूते बोधिसत्त्वेन महासत्त्वेन अष्टम्यां भूमौ वर्तमानेन चत्वारो धर्माः 5 परिपूरयितव्याः। कतमे चत्वारः? यदुत इन्द्रियपरापरज्ञानं बुद्धक्षेत्रपरिशोधनं मायोपमस्य समाधेरभीक्ष्णं समापत्तिः यथा यथा च सत्त्वानां कुशलमूलनिष्पत्तिस्तथा तथा आत्मप्रभाव-मभिनिर्मिमीते, संचिन्त्यभवोत्पादनता। इमे सुभूते बोधिसत्त्वेन महासत्त्वेन अष्टम्यां भूमौ वर्तमानेन चत्वारो धर्माः परिपूरयितव्याः॥

पुनरपरं सुभूते बोधिसत्त्वेन महासत्त्वेन नवम्यां भूमौ वर्तमानेन द्वादश धर्माः 10 परिपूरयितव्याः। कतमे द्वादश? यदुत अनन्तप्रणिधानपरिग्रहः। स यथा यथा प्रणिदधाति, तथा तथास्य समृध्यते। देवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगरुतज्ञानं प्रतिभाननिर्देशज्ञानं गर्भावक्रान्तिसंपत् कुशलसंपत् जातिसंपत् गोत्रसंपत् परिवारसंपत् जनसंपत् नैष्क्रम्यसंपत् बोधिवृक्षसंपत् सर्वगुणपरिपूरणसंपत्। इमे सुभूते बोधिसत्त्वेन महासत्त्वेन नवम्यां भूमौ वर्तमानेन द्वादश धर्माः परिपूरयितव्याः॥ 15

दशम्यां पुनः सुभूते बोधिसत्त्वभूमौ वर्तमानो बोधिसत्त्वः महासत्त्वस्तथागत एवेति वक्तव्यः॥

सुभूतिराह—कतमद् भगवन् बोधिसत्त्वस्य महासत्त्वस्याध्याशयपरिकर्म? भगवानाह—या सर्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैः सर्वकुशलमूलसमुदानयता, इदं सुभूते बोधिसत्त्वस्य महासत्त्वस्य अध्याशयपरिकर्म। तत्र कतमद् बोधिसत्त्वस्य महासत्त्वस्य हितवस्तुतापरिकर्म? 20 यद्बोधिसत्त्वो महासत्त्वः सर्वसत्त्वानामर्थाय महायानज्ञानपर्येष्टिमापद्यते। इदं बोधिसत्त्वस्य महासत्त्वस्य हितवस्तुतापरिकर्म। तत्र कतमद् बोधिसत्त्वस्य महासत्त्वस्य सर्वसत्त्वसम-चित्ततापरिकर्म? यत् सर्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैश्चतुरप्रमाणाभिनिर्हरणमैत्रीकरुणा-मुदितोपेक्षणम्, इदमुच्यते सर्वसत्त्वसमचित्ततापरिकर्म। तत्र कतमत् बोधिसत्त्वस्य महासत्त्वस्य त्यागपरिकर्म? यत् सर्वसत्त्वेभ्योऽविकल्पितं दानं ददाति, इदमुच्यते 25 त्यागपरिकर्म। तत्र कतमद् बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रसेवनापरिकर्म? यानि बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्राणि सर्वाकारज्ञतायां समादापयन्ति, तेषां मित्राणां सेवना भजना पर्युपासना शुश्रूषा। इदमुच्यते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रसेवना-परिकर्म। तत्र कतमद् वोधिसत्त्वस्य महासत्त्वस्य धर्मपर्येष्टिपरिकर्म? यत्सर्वाकारज्ञता-प्रतिसंयुक्तेन मनसिकारेण धर्मं पर्येषते, न च श्रावकप्रत्येकबुद्धभूमौ पतति, इदं 30

बोधिसत्त्वस्य महासत्त्वस्य धर्मपर्येष्टिपरिकर्म। तत्र कतमद् बोधिसत्त्वस्य महासत्त्वस्य अभीक्ष्णं नैष्क्रम्यपरिकर्म? यत् सर्वजातिष्वव्यवकीर्णोऽभिनिष्क्रामति, तथागतशासने प्रव्रजति, न चास्य कश्चिदन्तरायो भवति। इदं सुभूते बोधिसत्त्वस्य महासत्त्वस्य अभीक्ष्णं नैष्क्रम्यपरिकर्म। तत्र कतमद् बोधिसत्त्वस्य महासत्त्वस्य बुद्धकायस्पृहापरिकर्म? यद्
5 बुद्धविग्रहं दृष्ट्वा न जातु बुद्धमनसिकारेण विरहितो भवति, यावत् सर्वाकारज्ञतानुप्राप्तो भवति। इदं सुभूते बोधिसत्त्वस्य महासत्त्वस्य बुद्धकायस्पृहापरिकर्म। तत्र कतमद् बोधिसत्त्वस्य महासत्त्वस्य धर्मविवरणपरिकर्म? यद्बोधिसत्त्वो महासत्त्वः संमुखीभूतस्य तथागतस्य परिनिर्वृतस्य वा सत्त्वानां धर्मं देशयति आदौ कल्याणं मध्ये कल्याणं पर्यवसाने कल्याणम्, स्वर्थं सुव्यञ्जनं केवलं परिपूर्णं परिशुद्धं पर्यवदातं ब्रह्मचर्यं संप्रकाशयति, यदुत
10 सूत्रं गेयं व्याकरणमितिवृत्तकं जातकं निदानमवदानं तथा वैपुल्याद्भुतधर्मोपदेशाः। इदं बोधिसत्त्वस्य महासत्त्वस्य धर्मविवरणपरिकर्म। तत्र कतमद् बोधिसत्त्वस्य महासत्त्वस्य सत्यवचनपरिकर्म? यदुत यथावादितथाकारिता। इदं बोधिसत्त्वस्य महासत्त्वस्य सत्यवचन-परिकर्म। इमानि सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रथमायां भूमौ वर्तमानस्य दश परिकर्माणि॥

15 तत्र सुभूते कतमानि बोधिसत्त्वस्य महासत्त्वस्य द्वितीयायां भूमौ वर्तमानस्य अष्टौ परिकर्माणि? इह सुभूते बोधिसत्त्वस्य महासत्त्वस्य शीलपरिशुद्धिर्यदुत श्रावकप्रत्येकबुद्ध-चित्तानाममनसिकारता। येऽप्यन्ये दौःशील्यकरा बोधिपरिपन्थनकरा धर्मास्तेषाममनसिकारः। इयं बोधिसत्त्वस्य महासत्त्वस्य शीलपरिशुद्धिः। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य कृतज्ञता कृतवेदिता? यद्बोधिसत्त्वो महासत्त्वो बोधिसत्त्वचर्यां चरन् अल्पमपि कृतमा
20 संसारात् न नाशयति, प्रागेव बहु। इयं बोधिसत्त्वस्य महासत्त्वस्य कृतज्ञता कृतवेदिता। तत्र कतमं बोधिसत्त्वस्य महासत्त्वस्य क्षान्तिबलप्रतिष्ठानम्? यत्सर्वसत्त्वानामन्तिके अव्यापादाविहिंसाचित्तता। इदं बोधिसत्त्वस्य महासत्त्वस्य क्षान्तिबलप्रतिष्ठानम्। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य प्रामोद्यप्रीत्यनुभवनता? यत्सर्वसत्त्वपरिपाचनता। इयं बोधिसत्त्वस्य महासत्त्वस्य प्रामोद्यप्रीत्यनुभवनता। तत्र कतमो बोधिसत्त्वस्य महासत्त्वस्य
25 महाकरुणाया आमुखीभावः? यद्बोधिसत्त्वस्य महासत्त्वस्य बोधिसत्त्वचारिकां चरतः एवं भवति—एकैकस्य सत्त्वस्यार्थाय गङ्गानदीवालुकोपमान् कल्पान् निरये पचेयम्, यावन्न स सत्त्वो बुद्धज्ञाने प्रतिष्ठापित इति। एवमेकैकस्य कृतशः सत्त्वस्य य उत्साहो योऽपरिखेदः, अयमुच्यते बोधिसत्त्वस्य महासत्त्वस्य महाकरुणाया आमुखीभावः। तत्र कतमद् बोधि-सत्त्वस्य महासत्त्वस्य श्रद्धागौरवम्? यद्बोधिसत्त्वस्य महासत्त्वस्य सर्वत्र निहतमानतया
30 सश्रद्धता, इदमुच्यते बोधिसत्त्वस्य महासत्त्वस्य श्रद्धागौरवम्। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य गुरुशुश्रूषाश्रद्दधानता? यद् गुरूणामन्तिके शास्तृसंज्ञा, इयमुच्यते बोधि-सत्त्वस्य महासत्त्वस्य गुरुशुश्रूषाश्रद्दधानता। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य पारमिता-

स्तद्योगपर्येष्टिः? या अनन्यकर्मतया पारमितापर्येषणता, इयमुच्यते बोधिसत्त्वस्य महासत्त्वस्य पारमितास्तद्योगपर्येष्टिः। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य बाहुश्रुत्यतृप्तता? यत्किंचिद् बुद्धैर्भगवद्भिर्भाषितमिह वा लोकधातौ समन्ताद्वा दशदिशि लोके, तत्सर्वमाराधयिष्यामीति या अतृप्तता, इयं बोधिसत्त्वस्य महासत्त्वस्य बाहुश्रुत्यतृप्तता। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य निरामिषधर्मदानविवरणता? यद्बोधिसत्त्वो महासत्त्वो धर्मं 5 देशयति, स तेन धर्मदानकुशलेन आत्मनो बोधिमपि न प्रतिकाङ्क्षति, इयं बोधिसत्त्वस्य महासत्त्वस्य निरामिषधर्मदानविवरणता। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य बुद्धक्षेत्रपरिशोधनकुशलमूलपरिणामना? यैः कुशलमूलैर्बुद्धक्षेत्रं परिशोधयन् आत्मपरचित्तं परिशोधयति, तेषां कुशलमूलानां या परिणामना, इयमुच्यते बोधिसत्त्वस्य महासत्त्वस्य बुद्धक्षेत्रपरिशोधनकुशलमूलपरिणामना। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य अपरिमित- 10 संसारापरिखेदिता? या कुशलमूलोपस्तम्भता, यैः कुशलमूलैरुपस्तब्धः सत्त्वांश्च परिपाचयति, बुद्धक्षेत्रं च परिशोधयति, न च जातु खेदमापद्यते, यावन्न सर्वधर्मान् सर्वाकारज्ञतां च परिपूरयति, इयं बोधिसत्त्वस्य महासत्त्वस्य अपरिमितसंसारापरिखेदिता। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य ह्रीरपत्राप्यव्यवस्थानम्? या सर्वश्रावकप्रत्येकबुद्धचित्तजुगुप्सनता, इदं बोधिसत्त्वस्य महासत्त्वस्य ह्रीरपत्राप्यव्यवस्थानम्। तत्र कतमा बोधिसत्त्वस्य महा- 15 सत्त्वस्य अरण्यवासापरित्यागिता? या सर्वश्रावकप्रत्येकबोधिसमतिक्रमणता, इयं बोधिसत्त्वस्य महासत्त्वस्य अरण्यवासापरित्यागता। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य अल्पेच्छता? यद्बोधिसत्त्वो महासत्त्वो बोधिमपि नेच्छति, इयं बोधिसत्त्वस्य महासत्त्वस्य अल्पेच्छता। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य संतुष्टिः? यद्बोधिसत्त्वो महासत्त्वः सर्वाकारज्ञतामपि न मन्यते, इयं बोधिसत्त्वस्य महासत्त्वस्य संतुष्टिः। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य धूत- 20 गुणसंलेखानुत्सर्जनता? या गम्भीरेषु धर्मेषु निध्यप्तिः क्षान्तिः, इयं बोधिसत्त्वस्य महासत्त्वस्य धूतगुणसंलेखानुत्सर्जनता। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य शिक्षाया अपरित्यागिता? यः सर्वशिक्षाणामप्रचारः, इयं बोधिसत्त्वस्य महासत्त्वस्य शिक्षाया अपरित्यागिता। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य कामगुणजुगुप्सनता? यः कामचित्तस्यानुत्पादः, इयं बोधिसत्त्वस्य महासत्त्वस्य कामगुणजुगुप्सनता। तत्र कतमो बोधिसत्त्वस्य 25 महासत्त्वस्य निर्वित्सहगतश्चित्तोत्पादः? यः सर्वधर्माणामनभिसंस्कारः। अयं बोधिसत्त्वस्य महासत्त्वस्य निर्वित्सहगतश्चित्तोत्पादः। तत्र कतमा सर्वास्तिपरित्यागिता? या आध्यात्मिकबाह्यानां धर्माणामग्रहणता। इयं बोधिसत्त्वस्य महासत्त्वस्य सर्वास्तिपरित्यागिता। तत्र कतमा अनवलीनचित्तता? यया विज्ञानस्थितिषु अस्य चित्तं नावलीयते, इयं बोधिसत्त्वस्य महासत्त्वस्य अनवलीनचित्तता। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य सर्ववस्तुनिरपेक्षता? या 30 सर्ववस्तूनाममनसिकारता, इयं बोधिसत्त्वस्य महासत्त्वस्य सर्ववस्तुनिरपेक्षता। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य गृहिसंस्तवपरिवर्जनता? या बुद्धक्षेत्राद् बुद्धक्षेत्रं संक्रमणता

उपपादुकताप्रतिलाभमुण्डकाषायप्रावरणता, इयं बोधिसत्त्वस्य महासत्त्वस्य गृहिसंस्तवपरिवर्जनता। तत्र कतमा भिक्षुभिक्षुणीसंस्तवपरिवर्जनता? यद्भिक्षुणा वा भिक्षुण्या सह अच्छटिकासंघातमात्रमपि न तिष्ठति, न च तैर्विना परितसनाचित्तमुत्पादयति, इयं बोधिसत्त्वस्य महासत्त्वस्य भिक्षुभिक्षुणीसंस्तवपरिवर्जना। तत्र कथं बोधिसत्त्वेन महासत्त्वेन
5 कुलमात्सर्यं परिवर्जयितव्यम्? इह सुभूते बोधिसत्त्वेन महासत्त्वेन एवं चित्तमुत्पादयितव्यम्—यन्मया सत्त्वानां सर्वसुखोपधानं कर्तव्यम्। तत्र ते सत्त्वाः स्वपुण्यैरेव सुखिताः। नात्र मया मात्सर्यचित्तमुत्पादयितव्यम्। इदं बोधिसत्त्वस्य महासत्त्वस्य कुलमात्सर्यपरिवर्जनता। तत्र कथं बोधिसत्त्वेन महासत्त्वेन संगणिकास्थानं परिवर्जयितव्यम्? यत्र बोधिसत्त्वस्य महासत्त्वस्य संगणिकास्थानस्थितस्य श्रावकप्रत्येकबुद्धप्रतिकथा स्यात्, तत्प्रतिसंयुक्तं
10 वा चित्तोत्पादमुपादयेत्, न तत्र बोधिसत्त्वेन महासत्त्वेन स्थातव्यम्। इयं बोधिसत्त्वस्य महासत्त्वस्य संगणिकास्थानपरिवर्जनता। तत्र कथं बोधिसत्त्वेन महासत्त्वेन आत्मोत्कर्षणा परिवर्जयितव्या? या आध्यात्मिकानां धर्माणामसमनुपश्यना, इयं बोधिसत्त्वस्य महासत्त्वस्य आत्मोत्कर्षणापरिवर्जना। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य परपंसनापरिवर्जनता? यदुत बाह्यानां धर्माणामसमनुपश्यना। इयं बोधिसत्त्वस्य महासत्त्वस्य परपंसना-
15 परिवर्जनता। तत्र कथं बोधिसत्त्वेन महासत्त्वेन दशाकुशलाः कर्मपथाः परिवर्जयितव्याः? तथा हि एते आर्यमार्गस्यान्तरायकराः सुगतेर्वा, प्रागेव संबोधेः। एवं हि सुभूते बोधिसत्त्वस्य महासत्त्वस्य दशाकुशलकर्मपथपरिवर्जनम्। तत्र कथं बोधिसत्त्वेन महासत्त्वेन अधिमानः परिवर्जयितव्यः? तथाहि स न कंचिद्धर्मं समनुपश्यति, कुतः पुनरधिकं येनाधिमंस्यते। एवं हि सुभूते बोधिसत्त्वस्य महासत्त्वस्य अधिमानपरिवर्जना। तत्र कथं सुभूते
20 बोधिसत्त्वेन महासत्त्वेन स्तम्भः परिवर्जयितव्यः? तथा हि तद्वस्तु न समनुपश्यति यत्र स्तम्भमुत्पादयेत्। एवं हि सुभूते बोधिसत्त्वस्य महासत्त्वस्य स्तम्भपरिवर्जना। तत्र कथं सुभूते बोधिसत्त्वेन महासत्त्वेन विपर्यासाः परिवर्जयितव्याः? सर्ववस्तूनामनुपलब्धितामुपादाय। एवं हि सुभूते बोधिसत्त्वस्य महासत्त्वस्य विपर्यासपरिवर्जनता। तत्र कथं सुभूते बोधिसत्त्वेन महासत्त्वेन विचिकित्सा परिवर्जयितव्या? तथा हि संदेहापगतान्
25 सर्वधर्मान् समनुपश्यति। एवं हि सुभूते बोधिसत्त्वेन महासत्त्वेन विचिकित्सा परिवर्जयितव्या। तत्र कथं सुभूते बोधिसत्त्वेन महासत्त्वेन रागद्वेषमोहानामधिवासना परिवर्जयितव्या? तथा हि रागद्वेषमोहानां वस्तु न समनुपश्यति। एवं हि सुभूते बोधिसत्त्वस्य महासत्त्वस्य रागद्वेषमोहानामधिवासना। तत्र कथं बोधिसत्त्वेन महासत्त्वेन षड् धर्माः परिपूरयितव्याः? यदुत षट् पारमिताः—दानपारमिता यावत्प्रज्ञापारमिता—इमाः षट् पारमिताः परिपूरयितव्याः।
30 तत्र कथं बोधिसत्त्वेन महासत्त्वेन षड् धर्माः परिवर्जयितव्याः? यदुत श्रावकचित्तं परिवर्जयितव्यम्। तत्कस्य हेतोः? तथा हि नैष मार्गो बोधये। प्रत्येकबुद्धचित्तं परिवर्जयितव्यम्। तत्कस्य हेतोः? तथा हि नैष मार्गो बोधये। परितसनाचित्तं न कर्तव्यम्।

तत्कस्य हेतोः? तथा हि नैष मार्गो बोधये। याचनकं दृष्ट्वा नावलीनचित्तमुत्पादयितव्यम्। तत्कस्य हेतोः? तथा हि नैष मार्गो बोधये। सर्वस्वमपि परित्यज्य न दुर्मनस्को भवति। तत्कस्य हेतोः? तथा हि नैष मार्गो बोधये। याचनकविक्षेपो न कर्तव्यः। तत्कस्य हेतोः? तथा हि नैष मार्गो बोधये। तत्र कथं बोधिसत्त्वेन महासत्त्वेन आत्मग्राहो न कर्तव्यः? तत्कस्य हेतोः? तथा हि अत्यन्ततया आत्मा न संविद्यते। एवं बोधिसत्त्वेन महासत्त्वेन आत्मग्राहो न कर्तव्यः। एवं 5 सत्त्वग्राहो जीवग्राहः पुद्गलग्राहो न कर्तव्यः। तत्कस्य हेतोः? तथा हि एते अत्यन्ततया न संविद्यन्ते। एवं सत्त्वजीवपुद्गलग्राहा न कर्तव्याः। तत्र कथं बोधिसत्त्वेन महासत्त्वेन उच्छेदग्राहो न कर्तव्यः? तथा हि न कश्चिद्धर्म उच्छिद्यते। अत्यन्ततया अनुत्पन्नत्वात् सर्वधर्माणां नोच्छेदः। एवमुच्छेदग्राहो न कर्तव्यः। तत्र कथं बोधिसत्त्वेन महासत्त्वेन शाश्वतग्राहो न कर्तव्यः? तथा हि यो धर्मो नोत्पद्यते स न शाश्वतो भवति। एवं 10 शाश्वतग्राहो न कर्तव्यः। तत्र कथं बोधिसत्त्वेन महासत्त्वेन निमित्तसंज्ञा नोत्पादयितव्या? तथा हि अत्यन्ततया संक्लेशो न संविद्यते। एवं निमित्तसंज्ञा नोत्पादयितव्या। तत्र कथं बोधिसत्त्वेन महासत्त्वेन हेतुदृष्टिर्न कर्तव्या? तथा हि स तां दृष्टिं न समनुपश्यति। एवं हेतुदृष्टिर्न कर्तव्या। एवं स्कन्धेषु धातुष्वायतनेष्वभिनिवेशो न कर्तव्यः। तथा हि ते धर्माः स्वभावेन न संविद्यन्ते। तत्र कथं बोधिसत्त्वेन महासत्त्वेन त्रैधातुकेऽभिनिवेशो न कर्तव्यः? 15 तथा हि त्रैधातुकस्वभावो न संविद्यते। एवं त्रैधातुकेऽभिनिवेशो न कर्तव्यः। तत्र कथं बोधिसत्त्वेन महासत्त्वेन त्रैधातुकेऽध्यवसानं न कर्तव्यम्? तथा हि तद्वस्तु नोपलभ्यते। एवं त्रैधातुकेऽध्यवसानं न कर्तव्यम्। तत्र कथं बोधिसत्त्वेन महासत्त्वेन त्रैधातुके आलयो न कर्तव्यः? तथा हि निःस्वभावत्वात्। एवं त्रैधातुके आलयो न कर्तव्यः। तत्र कथं बोधिसत्त्वेन महासत्त्वेन बुद्धधर्मसंघनिश्रयो न कर्तव्यः? तथा हि न बुद्धधर्मसंघदृष्टिनिश्र- 20 यात् बुद्धधर्मसंघदर्शनम्। एवं बुद्धधर्मसंघदृष्टिनिश्रयो न कर्तव्यः। तत्र कथं बोधिसत्त्वेन महासत्त्वेन शीलदृष्टिनिश्रयो न कर्तव्यः? तथा हि न शीलदृष्टिनिश्रयाच्छीलपरिशुद्धिर्भवति। एवं शीलदृष्टिनिश्रयो न कर्तव्यः। तत्र कथं बोधिसत्त्वेन महासत्त्वेन शून्यतायां विवादो न कर्तव्यः? तथा हि सर्वधर्माः स्वभावेन शून्या न शून्यतया। एवं शून्यतायां विवादो न कर्तव्यः। तत्र कथं बोधिसत्त्वेन महासत्त्वेन शून्यताविरोधो न कर्तव्यः? 25 तथा हि सर्वधर्माः शून्याः। न शून्यता शून्यतां विरोधयति। एवं शून्यतायां विरोधोऽत्र न कर्तव्यः। तत्र कथं बोधिसत्त्वेन महासत्त्वेन शून्यता परिपूरयितव्या? स्वलक्षणशून्यता- मुपादाय परिपूरिर्बोधिसत्त्वस्य °महासत्त्वस्य शून्यतापरिपूरिः। एवं शून्यतायां विवादो न कर्तव्यः। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य अनिमित्तासाक्षात्क्रिया? यदुत सर्वनिमि- त्तानाममनसिकारता। इयं बोधिसत्त्वस्य महासत्त्वस्य अनिमित्तासाक्षात्क्रिया। तत्र कतमद् 30 बोधिसत्त्वस्य महासत्त्वस्य अप्रणिहितज्ञानम्? यत् सर्वत्रैधातुके चित्तस्याप्रतिष्ठानम्। इदं बोधिसत्त्वस्य महासत्त्वस्य अप्रणिहितज्ञानम्। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य

त्रिमण्डलपरिशुद्धिः? यदुत दशकुशलकर्मपथपरिशुद्धिः। एवं बोधिसत्त्वस्य महासत्त्वस्य त्रिमण्डलपरिशुद्धिः। तत्र कथं बोधिसत्त्वेन महासत्त्वेन सर्वसत्त्वेषु कृपाकरुणापरिपूरिः कर्तव्या? यो महाकरुणायाः प्रतिलाभः। एवं बोधिसत्त्वेन महासत्त्वेन सर्वसत्त्वेषु कृपाकरुणापरिपूरिः कर्तव्या। तत्र कथं बोधिसत्त्वेन महासत्त्वेन सर्वसत्त्वा नावमन्तव्याः?
5 यदुत मैत्रीपरिपूर्या। एवं बोधिसत्त्वेन महासत्त्वेन सर्वसत्त्वा नावमन्तव्याः। तत्र कथं बोधिसत्त्वस्य महासत्त्वस्य समतादर्शनम्? यदुत अनुत्क्षेपोऽप्रक्षेपः सर्वधर्माणाम्। इदं बोधिसत्त्वस्य महासत्त्वस्य समतादर्शनम्। तत्र कथं बोधिसत्त्वस्य महासत्त्वस्य भूतनयप्रतिवेधः? यः सर्वधर्माणामप्रतिवेधः। अयं बोधिसत्त्वस्य महासत्त्वस्य भूतनयप्रतिवेधः। तत्र कथं बोधिसत्त्वस्य महासत्त्वस्य अनुत्पादक्षान्तिः? या
10 सर्वधर्माणामनुत्पादाय अनिरोधाय अनभिसंस्काराय क्षान्तिः। इयं बोधिसत्त्वस्य महासत्त्वस्य अनुत्पादक्षान्तिः। तत्र किं बोधिसत्त्वस्य महासत्त्वस्य अनुत्पादज्ञानम्? यन्नामरूपानुत्पादज्ञानम्। इदं बोधिसत्त्वस्य महासत्त्वस्य अनुत्पादज्ञानम्। तत्र को बोधिसत्त्वस्य महासत्त्वस्य एकनयनिर्देशः? या अद्वयसमुदाचारता। अयं बोधिसत्त्वस्य महासत्त्वस्य एकनयनिर्देशः। तत्र कथं बोधिसत्त्वस्य महासत्त्वस्य कल्पनासमुद्घातः?
15 या सर्वधर्माणां कल्पना। अयं बोधिसत्त्वस्य महासत्त्वस्य कल्पनासमुद्घातः। तत्र कथं बोधिसत्त्वस्य महासत्त्वस्य संज्ञादृष्टिविवर्तः? या सर्वश्रावकप्रत्येकबुद्धभूमेः संज्ञादृष्टिविवर्तनता। अयं बोधिसत्त्वस्य महासत्त्वस्य संज्ञादृष्टिविवर्तः। तत्र कतमो बोधिसत्त्वस्य महासत्त्वस्य क्लेशविवर्तः? यः सर्ववासनानुसंधिक्लेशोत्सर्गः। अयं बोधिसत्त्वस्य महासत्त्वस्य क्लेशविवर्तः। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य शमथविपश्यनाभूमिः? या सर्वाकारज्ञता-
20 ज्ञानम्। इयं बोधिसत्त्वस्य महासत्त्वस्य शमथविपश्यनाभूमिः। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य दान्तचित्तता? या त्रैधातुकेऽनभिरतिः। इयं बोधिसत्त्वस्य महासत्त्वस्य दान्तचित्तता। तत्र कतमद् बोधिसत्त्वस्य महासत्त्वस्य अप्रतिहतज्ञानम्? यो बुद्धचक्षुःप्रतिलम्भः। इदं बोधिसत्त्वस्य महासत्त्वस्य अप्रतिहतज्ञानम्। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य अनुनयापसरणज्ञता? या षडायतनिका उपेक्षा। इयं बोधिसत्त्वस्य महासत्त्वस्य अनुनयाप-
25 सरणज्ञता। तत्र कतमद् बोधिसत्त्वस्य महासत्त्वस्य यत्रेच्छाक्षेत्रगमनम्? यदेकबुद्धक्षेत्रान्न चलति, सर्वबुद्धक्षेत्रेषु संदृश्यते, न चास्य बुद्धक्षेत्रसंज्ञोत्पद्यते। इदं बोधिसत्त्वस्य महासत्त्वस्य यत्रेच्छाक्षेत्रगमनम्। तत्र कतमं बोधिसत्त्वस्य महासत्त्वस्य सर्वत्रात्मभावदर्शनम्? यद् यथापर्षन्मण्डले आत्मभावदर्शनम्। इदं बोधिसत्त्वस्य महासत्त्वस्य सर्वत्रात्मभावदर्शनम्। तत्र कतमो बोधिसत्त्वस्य महासत्त्वस्य सर्वसत्त्वचित्तचरितानुप्रवेशः? यदेकचित्तेन सर्वसत्त्व-
30 चित्तचरितज्ञानम्। अयं बोधिसत्त्वस्य महासत्त्वस्य सर्वसत्त्वचित्तचरितानुप्रवेशः। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य अभिज्ञाविक्रीडिता? याभिरभिज्ञाभिर्विक्रीडमानो बुद्धक्षेत्राद् बुद्धक्षेत्रं संक्रामति बुद्धदर्शनाय, न च बुद्धसंज्ञो भवति। इयं बोधिसत्त्वस्य महासत्त्वस्य

अभिज्ञाविक्रीडना । तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य यथादृष्टबुद्धक्षेत्रपरिनिष्पादनता ? या त्रिसाहस्रलोकधात्वीश्वरचक्रवर्तिमूर्तिस्थितस्य सर्वलोकधातुपरित्यागस्य अमन्यनता । इयं बोधिसत्त्वस्य महासत्त्वस्य यथादृष्टबुद्धक्षेत्रपरिनिष्पादनता । तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य बुद्धपर्युपासनता ? या बुद्धपर्युपासनता सर्वसत्त्वानुग्रहं प्रति । इयं बोधिसत्त्वस्य महासत्त्वस्य बुद्धपर्युपासनता । तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य बुद्धकाययथाभूतप्रत्यवेक्षणता ? या 5 धर्मकाययथाभूतप्रत्यवेक्षणता । इयं बोधिसत्त्वस्य महासत्त्वस्य बुद्धकाययथाभूतप्रत्यवेक्षणता । तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य इन्द्रियपरापरज्ञानता ? या दशसु बलेषु स्थित्वा सर्वसत्त्वानामिन्द्रियपरिपूरिप्रज्ञाज्ञानता । इयं बोधिसत्त्वस्य महासत्त्वस्य इन्द्रियपरापरज्ञानता । तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य बुद्धक्षेत्रपरिशोधनता ? या सर्वसत्त्वचित्तपरिशोधनता । इयं बोधिसत्त्वस्य महासत्त्वस्य बुद्धक्षेत्रपरिशोधनता । तत्र कतमो बोधिसत्त्वस्य महासत्त्वस्य 10 मायोपमसमाधिः ? यत्र समाधौ स्थित्वा सर्वाः क्रियाः करोति, न चास्य चित्तप्रचारो भवति । अयं बोधिसत्त्वस्य महासत्त्वस्य मायोपमसमाधिः । तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य अभीक्ष्णसमापत्तिः ? यो बोधिसत्त्वस्य महासत्त्वस्य विपाकजः समाधिः । इयं बोधिसत्त्वस्य महासत्त्वस्य अभीक्ष्णसमापत्तिः । तत्र कतमो बोधिसत्त्वस्य महासत्त्वस्य संचिन्त्यात्मभावपरिग्रहः ? यद् बोधिसत्त्वो महासत्त्वो यथा यथा सत्त्वानां कुशलमूलपरि- 15 निष्पत्तिर्भवति तथा तथा संचिन्तया आत्मभावं परिगृह्णाति । अयं बोधिसत्त्वस्य महासत्त्वस्य संचिन्त्यात्मभावपरिग्रहः । तत्र कतमं बोधिसत्त्वस्य महासत्त्वस्यानन्तप्रणिधानम् ? यद्बोधिसत्त्वो महासत्त्वः षण्णां पारमितानां परिपूर्णत्वाद्यथा यथा प्रणिधिं प्रणिदधाति, तथा तथा समृध्यते । इदं बोधिसत्त्वस्य महासत्त्वस्य अनन्तप्रणिधानम् । तत्र कतमं बोधिसत्त्वस्य महासत्त्वस्य सर्वसत्त्वरुतज्ञानम् ? यद्बोधिसत्त्वो महासत्त्वो निरुक्तिप्रतिसंविदा देवादीनां 20 रुतं प्रतिसंविध्यति । इदं बोधिसत्त्वस्य महासत्त्वस्य सर्वसत्त्वरुतज्ञानम् । तत्र कतमं बोधिसत्त्वस्य महासत्त्वस्य परिपूर्णप्रतिभानम् ? यद्बोधिसत्त्वो महासत्त्वः प्रतिभानप्रतिसंविदा परिपूर्णप्रतिभाननिर्देशज्ञानं प्रतिविध्यति । इदं बोधिसत्त्वस्य महासत्त्वस्य परिपूर्णप्रतिभानम् । तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य गर्भावक्रान्तिसंपत् ? इह बोधिसत्त्वो महासत्त्वः सर्वासु जातिषु उपपादुक उपपद्यते । इयं बोधिसत्त्वस्य महासत्त्वस्य गर्भावक्रान्तिसंपत् । 25 तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य कुलसंपत् ? । यद्बोधिसत्त्वो महासत्त्वः क्षत्रियमहाशालकुलेषु ब्राह्मणमहाशालकुलेषु वा प्रत्याजायते । इयं बोधिसत्त्वस्य महासत्त्वस्य कुलसंपत् । तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य गोत्रसंपत् ? यद्बोधिसत्त्वो महासत्त्वो यस्माद्गोत्रात्पूर्वका बोधिसत्त्वा अभूवंस्तत्र गोत्रे प्रत्याजायते । इयं बोधिसत्त्वस्य महासत्त्वस्य गोत्रसंपत् । तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य परिवारसंपत् ? यद्बोधिसत्त्वो महासत्त्वो बोधौ 30 सत्त्वान् प्रतिष्ठाप्य बोधिसत्त्वपरिहार एवं भवति । इयं बोधिसत्त्वस्य महासत्त्वस्य परिवारसंपत् । तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य जन्मसंपत् ? यज्जातमात्र एव

बोधिसत्त्वो महासत्त्वः सर्वलोकधातूनवभासेन स्फरति, तांश्च सर्वान् षड्विकारं कम्पयति। इयं बोधिसत्त्वस्य महासत्त्वस्य जन्मसंपत्। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य अभिनिष्क्रमणसंपत्? । यद्बोधिसत्त्वो महासत्त्वः प्रव्रजितोऽनेकैः सत्त्वकोटीनियुतशतसहस्रैः सार्धमभिनिष्क्रामति गृहात्। इयं बोधिसत्त्वस्य महासत्त्वस्य अभिनिष्क्रमणसंपत्। तत्र 5 कतमा बोधिसत्त्वस्य महासत्त्वस्य बोधिवृक्षव्यूहसंपत्? यद्बोधिसत्त्वस्य महासत्त्वस्य बोधिवृक्षस्य मूलं सौवर्णं भवति, स्कन्धो वैदूर्यमयो भवति, सर्वरत्नमयाः शाखाः, पत्राणि सर्वरत्नमयानि, तस्य वृक्षस्य पुष्पगन्धोऽवभासश्च अनन्तान् लोकधातूनवभासेन स्फरति। इयं बोधिसत्त्वस्य महासत्त्वस्य वृक्षव्यूहसंपत्। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य सर्वगुणपरिपूरिसंपत्? या बोधिसत्त्वस्य महासत्त्वस्य सत्त्वपरिपाकेन बुद्धक्षेत्रपरिशुद्धिः। 10 इयं बोधिसत्त्वस्य महासत्त्वस्य सर्वगुणपरिपूरिसंपत्॥

तत्र कथं बोधिसत्त्वो महासत्त्वो दशम्यां भूमौ स्थितः संस्तथागत एवेति वक्तव्यः? यदा बोधिसत्त्वस्य महासत्त्वस्य दश पारमिताः परिपूर्णा भवन्ति, यावदष्टादशावेणिका बुद्धधर्मा परिपूर्णा भवन्ति, सर्वाकारज्ञताज्ञानं च सर्ववासनानुसंधिक्लेशप्रहाणं भवति, महाकरुणा च सर्वबुद्धधर्माः परिपूर्णा भवन्ति। एवं हि सुभूते बोधिसत्त्वो महासत्त्वो 15 दशम्या पुनर्बोधिसत्त्वभूमेः परं तथागत एवेति वक्तव्यः॥

तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य दश भूमयः? यद्बोधिसत्त्वो महासत्त्व उपायकौशल्येन सर्वासु पारमितासु चरन् सप्तत्रिंशद्बोधिपक्षेषु धर्मेषु शिक्षितोऽप्रमाणध्यानारूप्यसमापत्तिषु चरन् दशतथागतबलप्रतिसंवित्सु अष्टादशावेणिकेषु बुद्धधर्मेषु चरन् गोत्रभूमिमष्टमकभूमिदर्शनभूमितनुभूमिं वीतरागभूमिं कृताविभूमिं श्रावकभूमिं प्रत्येकबुद्धभूमिं 20 बोधिसत्त्वभूमिं बोधिसत्त्वो महासत्त्वोऽतिक्रम्य एता नव भूमीरतिक्रम्य बुद्धभूमौ प्रतिष्ठते। इयं बोधिसत्त्वस्य महासत्त्वस्य दशमी भूमिः। एवं हि सुभूते बोधिसत्त्वो महासत्त्वो महायानसंप्रस्थितो भवति॥

इति भूमिसंभारः॥



# तृतीयं परिशिष्टम् ।

## आर्यासङ्गविरचिता बोधिसत्त्वभूमिः ।

### विहारपटलम्[1] ।

उद्दानम्—गोत्रं तथाधिमुक्तिश्च प्रमुदितोऽधिशीलमधिचित्तं त्रयः प्रज्ञा द्वे आनिमित्ते साभोगश्च अनाभोगश्च प्रतिसंविदश्च परमश्च स्यात् तथागतोत्तमो विहारः ॥ 5

एवं गोत्रसंपदमुपादाय यथोक्तायां बोधिसत्त्वशिक्षायां शिक्षमाणानां यथोक्तेषु च बोधिसत्त्वलिङ्गेषु संदृश्यमानानां बोधिसत्त्वपक्ष्यप्रयोगेषु च सम्यक्प्रयुक्तानां बोधिसत्त्वाध्याशयांश्च यथोक्तान् विशोधयतां बोधिसत्त्वानां समासतो द्वादश बोधिसत्त्वविहारा भवन्ति, यैर्बोधिसत्त्वविहारैः सर्वा बोधिसत्त्वचर्याः संगृहीता वेदितव्याः । त्रयोदशश्च तथागतविहारो योऽस्य भवत्यभिसंबोधेर्निरुत्तरो विहारः ॥ 10

तत्र द्वादश बोधिसत्त्वविहाराः कतमे ? [1]गोत्रविहारः । [2]अधिमुक्तिचर्याविहारः । [3]प्रमुदितविहारः । [4]अधिशीलविहारः । [5]अधिचित्तविहारः । [6-8]अधिप्रज्ञा विहारास्त्रयः—बोधिपक्षप्रतिसंयुक्तः, सत्यप्रतिसंयुक्तः, प्रतीत्यसमुत्पादप्रवृत्तिनिवृत्तिप्रतिसंयुक्तश्च इति । येन स बोधिसत्त्वस्तत्त्वं पश्यति, यच्च तत्त्वं पश्यति, तस्य च तत्त्वस्याज्ञानाद्यथा प्रवृत्तिर्दुःखस्य, ज्ञानाच्च पुनरप्रवृत्तिर्दुःखस्य भवति सत्त्वानाम्, तदेतद्बोधिसत्त्वस्य त्रिभिर्मुखैः प्रज्ञया 15 व्यवचारयतस्त्रयोऽधिप्रज्ञाविहारा भवन्ति । [9]साभिसंस्कारः साभोगनिश्छिद्रमार्गवाहनो निर्निमित्तो विहारः । [10]अनभिसंस्कारोऽनाभोगमार्गवाहनो निर्निमित्त एव विहारः । [11]प्रतिसंविद्विहारः । [12]परमश्च परिनिष्पन्नो बोधिसत्त्वविहारः । इमे ते द्वादशविधा बोधिसत्त्वानां बोधिसत्त्वविहाराः । एषां सर्वविहारसंग्रहः सर्वबोधिसत्त्वचर्यासंग्रहो भवति । ता[13]थागतः पुनर्विहारो यः सर्वबोधिसत्त्वविहारसमतिक्रान्तोऽभिसंबुद्धबोधेर्विहारः, तत्र ताथागतस्य पश्चिमस्य विहारस्य 20 [2]प्रतिष्ठायोगस्थाने पश्चिमे साकल्येन निर्देशो भविष्यति । द्वादशानां पुनर्बोधिसत्त्वानां विहाराणां यथा व्यवस्थानं भविष्यति तथा निर्देक्ष्यामि ॥

( १ ) कतमश्च बोधिसत्त्वस्य गोत्रविहारः ? कथं च बोधिसत्त्वो गोत्रस्थो विहरति ? इह बोधिसत्त्वो गोत्रविहारी प्रकृतिभद्रसंतानतया प्रकृत्या बोधिसत्त्वगुणैर्बोधिसत्त्वार्हैः कुशलैर्धर्मैः समन्वागतो भवति । तत्समुदाचारे च संदृश्यते प्रकृतिभद्रतयैव न हठयोगेन । 25 तस्मिन् कुशले प्रवर्तते । अपि तु [3]प्रतिसंख्यानतः सानुग्रहः संभृतो ( संवृतो ) भवति । सर्वेषां च बुद्धधर्माणां गोत्रविहारी बोधिसत्त्वो बीजधरो भवति । सर्वबुद्धधर्माणामस्य सर्वबीजान्यात्मभावगतान्याश्रयगतानि विद्यन्ते । औदारिकमलविगतश्च बोधिसत्त्वो गोत्रविहारी भवति । अभव्यः स तद्रूपं संक्लेशपर्यवस्थानं संमुखीकर्तुं येन पर्यवस्थानेन पर्यवस्थितोऽन्य-

---

१ According to Guṇavarman, this section is called बोधिभूम्युत्पत्तिपटल. २ प्रतिष्ठायोग is the name of a Section of the entire work. ३ Huen Tsang seems to read अप्रतिसंख्यानतः.

तमदानन्तर्यकर्म समुदाचरेत्, कुशलमूलानि वा समुच्छिन्द्यात् । यश्च विधिर्गोत्रस्थस्य गोत्रपटले[1] निर्दिष्टः, स गोत्रविहारिणो बोधिसत्त्वस्य विस्तरेण वेदितव्यः । इत्ययमुच्यते बोधिसत्त्वस्य गोत्रविहारः ॥

(२) तत्र कतमो बोधिसत्त्वस्याधिमुक्तिचर्याविहारः ? इह बोधिसत्त्वस्य प्रथमं 5 चित्तोत्पादमुपादाय अशुद्धाध्याशयस्य या काचिद्बोधिसत्त्वचर्या, अयमस्य अधिमुक्तिचर्याविहार इत्युच्यते । तत्र गोत्रविहारी बोधिसत्त्वस्तदन्येषां सर्वेषां बोधिसत्त्वविहाराणामेकादशानां ताथागतस्य च विहारस्य हेतुमात्रे वर्तते । हेतुपरिग्रहेण तु तेन कश्चित्तदन्यो बोधिसत्त्वविहार आरब्धो[2] भवति न प्रतिलब्धो न विशोधितः, कुतः पुनस्ताथागतविहारः । अधिमुक्तिचर्याविहारिणा पुनर्बोधिसत्त्वेन सर्वे बोधिसत्त्वविहारास्ताथागतश्च विहार आरब्धा 10 भवन्ति, न तु प्रतिलब्धा न विशोधिताः । स एव त्वधिमुक्तिचर्याविहारः प्रतिलब्धो भवति । तस्यैव चायं विशुद्धये प्रतिपन्नः । अधिमुक्तिचर्याविहारे परिशुद्धे प्रमुदितविहारं पूर्वारब्धमेव प्रतिलभते । तस्यैव च विशुद्धये प्रतिपन्नः । प्रमुदितविहारे परिशुद्धे अधिशीलविहारं पूर्वारब्धमेव प्रतिलभते, तस्यैव च विशुद्धये प्रतिपन्नो भवति । एवं विस्तरेण यावत्परमः परिनिष्पन्नो बोधिसत्त्वविहारो वेदितव्यः । परमे परिनिष्पन्ने बोधिसत्त्वविहारे 15 परिशुद्धे अनन्तरं पूर्वारब्धस्य ताथागतस्य विहारस्य सकृत्प्रतिलम्भो विशुद्धिश्च वेदितव्या । इदं ताथागतविहारे बोधिसत्त्वविहारेभ्यो विशेषणं वेदितव्यम् ॥

(३) तत्र कतमो बोधिसत्त्वस्य प्रमुदितविहारः ? यः शुद्धाध्याशयस्य बोधिसत्त्वस्य विहारः ॥

(४) तत्र कतमो बोधिसत्त्वस्याधिशीलविहारः ? योऽध्याशयशुद्धिनिदानेन प्रकृति- 20 शीलेन संयुक्तस्य विहारः ॥

(५) तत्र कतमो बोधिसत्त्वस्याधिचित्तविहारः ? योऽधिशीलविहारविशुद्धिनिदानतो लौकिकध्यानसमाधिसमापत्तिभिर्विहारः ॥

(६) तत्र कतमो बोधिसत्त्वस्य बोधिपक्षप्रतिसंयुक्तोऽधिप्रज्ञविहारः ? यो लौकिकं ज्ञानविशुद्धिसंनिश्रयभूतं समाधिं निश्रित्य सत्यावबोधाय सम्यक्स्मृत्युपस्थानादीनां सप्त- 25 त्रिंशद्बोधिपक्ष्याणां धर्माणां प्रविचयविहारः ॥

(७) तत्र कतमो बोधिसत्त्वस्य सत्यप्रतिसंयुक्तोऽधिप्रज्ञविहारः ? यो बोधिपक्षप्रविचयं निश्रित्य यथावत् सत्यावबोधविहारः ॥

(८) तत्र कतमो बोधिसत्त्वस्य प्रतीत्यसमुत्पादप्रवृत्तिनिवृत्तिप्रतिसंयुक्तोऽधिप्रज्ञविहारः ? यस्तमेव सत्यावबोधमधिपतिं कृत्वा तज्ज्ञानात्सहेतुकदुःखप्रविचयप्रभावितः, 30 तज्ज्ञानाच्च सहेतुकदुःखनिरोधप्रविचयप्रभावितो विहारः ॥

---

१ Chapter I. २ C नारब्धो.

(९) तत्र कतमो बोधिसत्त्वानां साभिसंस्कारः साभोगो निर्निमित्तो विहारः? यस्तमेव त्रिविधमप्यधिप्रज्ञविहारमधिपतिं कृत्वा अभिसंस्कारेणाभोगेन निश्छिद्रनिरन्तः सर्वधर्मेषु तथा निर्विकल्पः प्रज्ञाभावनासभागतो विहारः ॥

(१०) तत्र कतमो बोधिसत्त्वानामनभिसंस्कारोऽनाभोगो निर्निमित्तो विहारः? यस्तस्यैव पूर्वकस्य निर्निमित्तस्य विहारस्य भावनाबाहुल्यात् स्वरसेनैव निश्छिद्रनिरन्तरवाहि- 5
मार्गानुगतो विहारः ॥

(११) तत्र कतमो बोधिसत्त्वानां प्रतिसंविद्विहारः? यस्तमेव सुपरिशुद्धं निश्चलं प्रज्ञासमाधिं निश्रित्य महामतिवैपुल्यमनुप्राप्तस्य परेषां धर्मसमाख्यातानुत्तर्यमारभ्य धर्माणां पर्यायार्थनिर्वचनप्रभेदप्रविचयविहारः ॥

(१२) तत्र कतमो बोधिसत्त्वस्य परमो विहारः? यत्र स्थितो बोधिसत्त्वो 10
बोधिसत्त्वमार्गनिष्ठागतोऽनुत्तरायां सम्यक्संबोधौ महाधर्माभिषेकप्राप्त एकजातिप्रतिबद्धो वा भवति चरमभविको वा, यस्य विहारस्यानन्तरं सहितमेवानुत्तरां सम्यक्संबोधिमभिसंबुध्य सर्वबुद्धकार्यं करोति ॥

तत्राधिमुक्तिचर्याविहारे बोधिसत्त्वो बोधिसत्त्वभावनायां परीत्तकारी भवति छिद्रकारी अनियतकारी पुनर्लाभपरिहाणितः। प्रमुदितविहारे बोधिसत्त्वस्तस्यामेव बोधिसत्त्वभावनायां 15
विपुलकारी भवत्यच्छिद्रकारी नियतकारी यथाप्रतिलब्धापरिहाणितः। यथा प्रमुदितविहारे, एवं यावत् त्रिष्वधिप्रज्ञविहारेषु। प्रथमं निर्निमित्तं विहारमुपादाय यावत्परमाद्बोधिसत्त्व-विहाराद्बोधिसत्त्वो बोधिसत्त्वभावनायामप्रमाणकारी भवत्यच्छिद्रकारी नियतकारी च। तत्राधि-मुक्तिचर्याविहारे बोधिसत्त्वनिर्निमित्तभावनायाः समारम्भो वेदितव्यः। प्रमुदितविहारेऽधि-शीलाधिचित्ताधिप्रज्ञविहारेषु तस्या बोधिसत्त्वनिर्निमित्तभावनायाः प्रतिलम्भो वेदितव्यः। 20
प्रथमेऽनिमित्तविहारे समुदागमः, द्वितीयेऽनिमित्तविहारे बोधिसत्त्वस्य निर्निमित्तभावनायाः परिशुद्धिर्वेदितव्या। प्रतिसंविद्विहारे परमे च विहारे तस्या एव बोधिसत्त्वनिर्निमित्त-भावनायाः फलप्रत्यनुभवनता वेदितव्या ॥

अधिमुक्तिचर्याविहारे वर्तमानस्य बोधिसत्त्वस्य के आकाराः, कानि लिङ्गानि, कानि निमित्तानि भवन्ति? अधिमुक्तिचर्याविहारे वर्तमानो बोधिसत्त्वः प्रतिसंख्यानबलिको भवति। 25
बोधिसत्त्वकृत्यप्रयोगेषु प्रतिसंख्याय प्रज्ञया प्रयुज्यते, न तु प्रकृत्या तन्मयतया। दृढाया अविवर्त्याया बोधिसत्त्वभावनाया अलाभी भवति। यथा भावनायाः, एवं भावनाफलस्य विविधानां प्रतिसंविदभिज्ञाविमोक्षसमाधिसमापत्तीनाम्। पञ्च च भयान्यसमतिक्रान्तो भवति— आजीविकाभयम्, अश्लोकभयम्, मरणभयम्, दुर्गतिभयम्, पर्षच्छारद्यभयं च। प्रतिसंख्याय च सत्त्वार्थेषु प्रयुज्यते न प्रकृत्यनुकम्पाप्रेमतया। एकदा च सत्त्वेषु मिथ्यापि प्रतिपद्यते कायेन 30
वाचा मनसा। एकदा विषयेऽध्यवसितो भवति। एकदा आगृहीतपरिष्कारतायामपि

संदृश्यते । श्रद्धागामी च भवति परेषां बुद्धबोधिसत्त्वानाम्, न तु प्रत्यात्मं तत्त्वज्ञो भवति यदुत तथागतं वा आरभ्य धर्मं वा संघं वा तत्त्वार्थं वा बुद्धबोधिसत्त्वप्रभावं वा हेतुं वा फलं वा प्राप्तव्यं वा अर्थं प्राप्य उपायं वा गोचरं वा । परीत्तेन च श्रुतमयचिन्तामयेन ज्ञानेन समन्वागतो भवति नाप्रमाणेन । तदपि चास्यैकदा संप्रमुष्यते । संप्रमोषधर्मश्च भवति ।
5 दुःखया च धन्धाभिज्ञया बोधिसत्त्वप्रतिपदा समन्वागतो भवति । न च तीव्रच्छन्दो भवति महाबोधावुत्तप्तवीर्यो गम्भीरसुसंनिविष्टप्रसादः । त्रिषु च स्थानेषु मुषितस्मृतिर्भवति विषयेषु मनापामनापेषु रूपशब्दगन्धरसस्प्रष्टव्यधर्मेष्वेकदा विपर्यस्तचित्ततया । उपपत्तौ तत्रतत्रात्मभावान्तरे प्रत्याजातस्य पूर्वकात्मभावविस्मरणात् । उद्दिष्टानामुद्गृहीतानां धर्माणां चिरकृतचिरभाषितस्य चैकदा विस्मरणात् । एवमेष त्रिषु स्थानेषु मुषितस्मृतिर्भवति ।
10 एकदा च मेधावी भवति धर्माणामुद्ग्रहणार्थप्रवेशसमर्थः, एकदा न तथा । एकदा स्मृतिमान् भवति, एकदा मुषितस्मृतिजातीयः । न च सत्त्वानां यथावद्विनयोपायाभिज्ञो भवति, नाप्यात्मनो बुद्धधर्माभिनिर्हारोपायाभिज्ञः । हठेन च परेषां धर्मं देशयति, अववादानुशासनीं वा प्रवर्तयति । सा चास्य हठेन प्रवर्तिता न यथाभूतमाज्ञाय । एकदा वन्ध्यो भवति, एकदा चावन्ध्यो रात्रिक्षिप्तानामिव शराणां यदृच्छासिद्धितामुपादाय । एकदा च
15 चित्तमप्युत्पादितं महाबोधादुत्सृजति । एकदा बोधिसत्त्वशीलसंवरसमादानान्निवर्तते नोत्सहते वा । एकदा सत्त्वार्थक्रियाप्रयुक्तोऽपि खेदमन्तरा कृत्वा तस्मात् सत्त्वार्थक्रियाप्रयोगात् प्रतिनिवर्तते । आशयतश्चात्मनः सुखकामो भवति, प्रतिसंख्याय च परसुखकामः । बोधिसत्त्वस्खलितेषु च प्रज्ञाबहुलो भवति न तु परिज्ञाय, परिज्ञायाशेषप्रहाणं वा पुनः पुनः स्खलिताध्याचारतया । एकदा नेयश्च भवत्यस्माद्बोधिसत्त्वपिटकधर्मविनयात् । एकदा
20 गम्भीरामुदारां ( धर्मदेशनां ) श्रुत्वा उत्त्रस्यति । भवति चास्य चेतसो विकम्पितत्वं विमतिः संदेहश्च । सर्वेण च सर्वं महाकरुणासमुदाचारविरहितो भवति सत्त्वेषु । अल्पेन च हितसुखोपसंहारेण सत्त्वेषु प्रत्युपस्थितो भवति न विपुलेनाप्रमेयेण च । सर्वासु परिपूर्णासु यथानिर्दिष्टासु बोधिसत्त्वशिक्षासु शिक्षते, न च सर्वैः परिपूर्णैर्यथानिर्दिष्टैर्बोधिसत्त्वलिङ्गैः समन्वागतो भवति । न च
25 सर्वेषु यथानिर्दिष्टेषु बोधिसत्त्वपक्षप्रयोगेषु परिपूर्णेषु संदृश्यते । दूरे चानुत्तरायाः सम्यक्संबोधेरात्मानं प्रत्येति, न च तथा निर्वाणेऽस्याध्याशयः संनिविष्टो भवति यथा संसारसंसृतौ । उत्तप्तैरचलैश्च कुशलैर्बोधिपक्ष्यैर्धर्मैरसमन्वागतो भवति । इतीमान्येवंभागीयानि लिङ्गानि निमित्तानि, इमे आकारा अधिमुक्तिचर्याविहारे वर्तमानस्य बोधिसत्त्वस्य वेदितव्याः । अधिमुक्तिचर्याविहारे मृद्व्यां क्षान्त्यां ( दशविहारावस्था )वर्तमानस्य
30 बोधिसत्त्वस्य एषां यथानिर्दिष्टानामाकारलिङ्गनिमित्तानामधिमात्रता वेदितव्या । मध्यायां क्षान्तौ ( दशचर्यावस्था )वर्तमानस्य एषामाकारलिङ्गनिमित्तानां मृदुता तनुत्वं वेदितव्यम् । अधिमात्रायां ( दशपरिणामनावस्था ) एव क्षान्तौ वर्तमानस्य एषां चाकारलिङ्गनिमित्ताना-

मशेषप्रहाणानन्तरं च प्रमुदितविहारप्रवेशो बोधिसत्त्वस्य वेदितव्यः । प्रतिलम्भयोगेन तस्यास्य प्रमुदितविहारिणः एते च सर्वधर्माः सर्वेण सर्वं न भवन्ति येऽधिमुक्तिचर्याविहारिण आख्याताः । एतद्विपर्ययेण च सर्वे शुक्लधर्माः संविद्यन्ते यैरयं समन्वागतो बोधिसत्त्वः शुद्धाध्याशय इत्युच्यते । किंचापि अधिमुक्तिचर्याविहारेऽपि वर्तमानस्य बोधिसत्त्वस्य मृदुमध्याधिमात्रयोगेन उत्तरोत्तरा शुद्धिरधिमोक्षस्यास्ति । न त्वसावध्याशयशुद्धिरित्युच्यते । तत्कस्य 5 हेतोः ? तथा सोऽधिमोक्ष एभिरनेकविधैरुपक्लेशैरुपक्लिष्टः प्रवर्तते । प्रमुदितविहारस्थितस्य तु बोधिसत्त्वस्य सर्वेषामेषामधिमोक्षोपक्लेशानां प्रहाणान्निरुपक्लेशः शुद्धोऽधिमोक्षः प्रवर्तते ॥

तत्र प्रमुदितविहारे वर्तमानस्य बोधिसत्त्वस्य के आकाराः, कानि लिङ्गानि, कानि निमित्तानि वेदितव्यानि ? इह बोधिसत्त्वोऽधिमुक्तिचर्याविहारात्प्रमुदितविहारमनुप्रविशन् पूर्वकं च बोधिसत्त्वप्रणिधानमनुत्तरायां सम्यक्संबोधावसुप्रतिविद्धबोध्यसुप्रतिविद्धबोध्युपायं 10 यद्भूयसा परप्रत्ययगाम्यसुनिश्चितं प्रहाय अन्यदभिनवं षड्भिराकारैः सुविनिश्चितं प्रत्यात्मं भावनामयं बोधिसत्त्वप्रणिधानमुत्पादयति, सर्वं तदन्यशुक्लप्रणिधानसमतिक्रान्तमतुल्यमसाधारणफलं लौकिकं च तत्सर्वलोकविषयसमतिक्रान्तं च सर्वसत्त्वदुःखपरित्राणानुगतत्वात् सर्वश्रावकप्रत्येकबुद्धासाधारणम् । एकक्षणमात्रमुत्पन्नेऽपि तस्मिन् प्रणिधाने धर्मप्रकृतिः सा तादृशी या अप्रमेयशुक्लधर्मेष्टफला भवति बोधिसत्त्वानाम् । निर्विकारं च तत्प्रणिधान- 15 मक्षयम्, नास्य प्रतिलब्धस्य कथंचित् पर्यायेण परिहाणिरन्यथाभावो वोपलभ्यते । विशेषभागीयं तदपरान्तकोटिपतितं महाबोधिनिष्ठं तत्पुनरेतत् सुविनिश्चितं बोधिसत्त्वप्रणिधानं चित्तोत्पाद इत्युच्यते ॥

स पुनरेष चित्तोत्पादो बोधिसत्त्वस्य समासतश्चतुर्भिराकारैर्वेदितव्यः । आदित एव तावत् कीदृशानां बोधिसत्त्वानां तच्चित्तमुत्पद्यते । किं चालम्ब्योत्पद्यते । कीदृशं च किं- 20 लक्षणं केनात्मनोत्पद्यते । उत्पन्ने च तस्मिंश्च चित्ते कानुशंसा भवतीत्येभिश्चतुर्भिराकारैः स चित्तोत्पादो वेदितव्यः । अधिमुक्तिचर्याविहारे सर्वाकारसुपचितकुशलमूलानां समासतः सम्यग्बोधिसत्त्वचर्यानियतानां बोधिसत्त्वानां तच्चित्तमुत्पद्यते । आयत्यां सम्यगाशु सर्वबोधिसंभारपरिपूरिं सर्वबोधिसत्त्वसत्त्वार्थक्रियापरिपूरिमनुत्तरसम्यक्संबोधिं सर्वाकारसर्वबुद्धधर्मपरिपूरिं बुद्धकार्यक्रियापरिपूरिं च समासत आलम्बनीकृत्य बोधिसत्त्वानां चित्तमुत्पद्यते । 25 सम्यगाशु च सर्वाकारसर्वबोधिसंभारानुकूलं सत्त्वेषु सर्वाकारबोधिसत्त्वकृत्यानुकूलमनुत्तरसम्यक्संबोधिस्वयंभूज्ञानप्रतिलम्भानुकूलं सर्वाकारबुद्धकृत्यकरणानुकूलं तच्चित्तमुत्पद्यते । तस्य चित्तस्योत्पादाद्बोधिसत्त्वोऽतिक्रान्तो भवति बालबोधिसत्त्वपृथग्जनभूमिम् । अवक्रान्तो भवति बोधिसत्त्वनियामम् । जातो भवति तथागतकुले । तथागतस्यौरसः पुत्रो भवति । नियतं संबोधिपरायणस्तथागतवंशनिबद्धो भवति । स च तथाभूतोऽवेत्यप्रसादप्राप्तः प्रामोद्यबहुलो 30 भवति । असंरम्भाविहिंसाक्रोधबहुलः । परेषां सर्वाकारां बोधिसत्त्वसत्त्वार्थक्रियां सर्वाकारां बोधिसंभारपरिपूरिं सर्वाकारां बोधिं बुद्धधर्मांश्च बुद्धकृत्यधिष्ठानं च शुद्धेनाध्याशयेनालम्बनीकुर्वन्

अधिमुच्यमानोऽवतरन् एतद्धर्माशुसमुदागमानुकूलतां चात्मनः संपश्यति, प्रत्यवगच्छन् प्रामोद्य-
बहुलश्च भवति। कुशलेनोदारेण नैष्क्रम्योपसंहितेन निरामिषेणाप्रतिसमेन कायचित्तानुग्राह-
केण प्रामोद्येन उत्तप्ततैरसमैः कुशलैर्धर्मैः समन्वागतः, आसन्नीभूतश्चानुत्तरायाः सम्यक्संबोधेः,
विशुद्धश्च मेऽध्याशयो महामहाबोधौ, सर्वाणि च मे भयान्यपगतानीत्यतोऽपि प्रामोद्यबहुलो
5 भवति। तथा ह्यस्य सुविनिश्चितापादितचित्तस्य बोधिसत्त्वस्य पञ्च भयानि प्रहीणानि भवन्ति।
सुपरिभावितनैरात्म्यज्ञानस्य आत्मसंज्ञा तावन्न प्रवर्तते, कुतः पुनरात्मस्नेहो वा उपकारस्नेहो
वा भविष्यति। अतोऽस्य आजीविकाभयं न भवति। पेयालं...... । स एवं
सर्वभयापगतः सर्वगम्भीरनिर्देशत्रासापगतः सर्वोच्छ्रयमानस्तम्भापगतः सर्वपरोपकारविप्रति-
पत्तिषु द्वेषापगतः सर्वलोकामिषहर्षापगतः। अक्लिष्टत्वादनुपहतेन सुशोधितत्वादप्रकृतेनाशयेन
10 सर्वकुशलधर्मसमुदागमाय। दृष्टे च धर्मे सर्वाकारं बोधिसत्त्ववीर्यमारभते श्रद्धाधिपतितां
पूर्वंगमां कृत्वा। आयत्यां च यानि तानि पूर्वनिर्दिष्टानि बोधिपक्षपटले दश महाप्रणिधानानि,
तान्यस्मिन् प्रमुदितविहारेऽभिनिर्हरत्याशयशुद्धितामुपादाय। अग्र्यसत्त्वदक्षिणीयशास्तृ-
धर्मस्वामिपूजायै महाप्रणिधानम्। तत्प्रणीतसद्धर्मसंधारणाय द्वितीयम्। अनुपूर्वसद्धर्मप्रवर्त-
नाय तृतीयम्। तदनुकूलं बोधिसत्त्वचर्याचरणतायै चतुर्थम्। तद्राजनसत्त्वपरिपाचनतायै
15 पञ्चमम्। बुद्धक्षेत्रेषूपपत्तितथागतदर्शनपर्युपासनसद्धर्मश्रवणतायै षष्ठम्। स्वबुद्धक्षेत्रपरि-
शोधनतायै सप्तमम्। बोधिसत्त्वैश्च सहैकाशयप्रयोगतायै अष्टमम्। सर्वसत्त्वार्थक्रियामोघतायै
नवमम्। अनुत्तरसम्यक्संबोध्यभिसंबोधनतायै बुद्धकृत्यकरणतायै दशमं महाप्रणिधानमभि-
निर्हरति। परं परं स सत्त्वधातुरनुपच्छेदवद् लोकधर्मानुपच्छेदवदेषां मे महाप्रणिधानानां
जन्मनि जन्मनि यावद्बोधिपर्यन्तगमनादविगमश्च असंप्रमोषश्च अविसंयोगश्च स्यादिति सम्य-
20 क्चित्तं प्रणिदधाति। पूर्वकं प्रणिधातव्येऽर्थे प्रणिधानम्।....एतान्येव महाप्रणिधानानि
प्रमुखानि कृत्वा तस्य बोधिसत्त्वस्य दश प्रणिधानासंख्येयशतसहस्राण्युत्पद्यन्ते सम्यक्प्रणि-
धानानाम्। तस्यैवमायत्यां च प्रणिधानवतो दृष्टे च धर्मे आरब्धवीर्यस्य दश विहारपरि-
शोधका धर्माः प्रमुदितविहारपरिशुद्धये संवर्तन्ते। सर्वबुद्धधर्मानभिश्रद्दधाति। प्रतीत्यसमु-
त्पादयोगेन केवलं सत्त्वानां दुःखस्कन्धसमुदागमं पश्यतः करुणा। मयैते सत्त्वा अस्मा-
25 त्केवलाद् दुःखस्कन्धाद्विमोचयितव्या इति संपश्यतो मैत्री। सर्वदुःखपरित्राणाभिप्रायस्यात्म-
निरपेक्षता। निरुपेक्षस्य सत्त्वेष्वाध्यात्मिकबाह्यवस्तुपरित्यागः। परतश्च तेषामेव सत्त्वानामर्थे
लौकिकलोकोत्तरधर्मपरिगवेषिणोऽखेदः। अखिन्नस्य च सर्वशास्त्रज्ञानसमुदागमविशुद्धिभिः
शास्त्रज्ञता। शास्त्रज्ञानस्य हीनमध्यविशिष्टेषु सत्त्वेषु यथायोगप्रतिपत्तिलोकज्ञता। तेष्वेव च
प्रयोगेषु कीलमात्रादि चर्यामारभ्य ह्रीक्यापत्राप्यता। तेष्वेव प्रयोगेष्वप्रत्युदावर्तनतया
30 धृतिबलाधानता। लाभसत्कारप्रतिपत्तिभ्यां च तथागतपूजोपस्थानता॥

इमे दश धर्मा विहारपरिशुद्धये संवर्तन्ते—यदुत श्रद्धा करुणा मैत्री त्यागोऽखेदः
शास्त्रज्ञता लोकज्ञता ह्रीक्यापत्राप्यता धृतिबलाधानता तथागतपूजोपस्थानता च। स च

बोधिसत्त्व एतांश्च धर्मान् समादाय वर्तते बहुलीकरोति, तदन्येषां च नवानामधिशीलादीनां बोधिसत्त्वविहाराणां सर्वाकारमार्गगुणदोषान् पर्येषते बुद्धबोधिसत्त्वानामन्तिकात्। तदभिज्ञश्च सुखमविप्रनष्टमार्गः........आकरप्रतिलम्भनिष्यन्दनिमित्तः। एवं च सर्वाकारान् विहारानाक्रम्य महाबोधिमधिगच्छति, महासत्त्वसार्थं च संसारकान्तार(दुर्गाद्) उत्तारयति। यैराकारैः प्रविशति, स प्रवेशः। यः प्रवेशः स प्रतिलम्भः। प्रविष्टस्य या महाफलानुशंसा- 5 निष्पत्तिः समुदागमश्च, स निष्यन्दो वेदितव्यः। तस्य अस्मिन् विहारे व्यवस्थितस्य द्वाभ्यां कारणाभ्यां बहवो बुद्धा आभासमागच्छन्ति दर्शनस्य। ये च श्रुता भवन्ति बोधिसत्त्वपिटके, ये च चेतसाधिमुक्ता भवन्ति दशसु दिक्षु नानानामसु लोकधातुषु नानानामास्तथागता इति, तानौदारिकप्रसादसहगतेन चेतसा दर्शनायायाचते। तस्य तथाभूतस्य ऋध्यत्येव सा याचना। इदमेकं कारणम्। एवं च चित्तं प्रणिदधाति—यत्र बुद्धोत्पादस्तत्र मे जन्म 10 भवेदिति। तस्य तथाभूतस्य ऋध्यत्येव तत्प्रणिधानम्। स एवमौदारिकप्रसाददर्शनतया प्रणिधानबलतया च तान् तथागतान् दृष्ट्वा सर्वाकारां पूजां सुखोपधानतामुपसंहरति, यथाशक्ति यथाबलं संघसंमाननां (च करोति)। तेषां च तथागतानामन्तिकाद्धर्मं शृणोति उद्गृह्णाति धारयति, धर्मानुधर्मप्रतिपत्त्या च संपादयति। तानि च कुशलमूलानि महाबोधौ परिणामयति। चतुर्भिश्च संग्रहवस्तुभिः सत्त्वान् परिपाचयति। तस्य एभिस्त्रिभिर्विशुद्धि- 15 कारणैस्तानि कुशलमूलानि (यथा) भूयस्या मात्रया विशुद्ध्यन्ति तथागतसंघधर्मपूजापरिग्रहणलया, संग्रहवस्तुभिः सत्त्वपरिपाचनतया, कुशलमूलानां बोधिपरिणामनतया च यावदनेकानि कल्पकोटीनियुतशतसहस्राणि। तद्यथा सुवर्णं प्रकृतिस्थं यथा यथाग्नौ प्रक्षिप्यते दक्षेण कर्मकारेण, तथा तथा विशुद्धतरतां गच्छति। एवमस्याशयशुद्धस्य बोधिसत्त्वस्य तानि कुशलमूलानि तैर्विशुद्धिकारणैर्विशुद्धतरतां गच्छन्ति। तत्रस्थश्च असावुपपत्तितो 20 यद्भूयसा चक्रवर्ती भवति, जन्मनि जन्मनि जम्बूद्वीपेश्वरः सर्वमात्सर्यमलापगतः सत्त्वानां मात्सर्यविनयनतायै। यच्च किंचिच्चतुर्भिः संग्रहवस्तुभिः कर्मारभते, तत्सर्वमविरहितं रत्नसर्वाकारबोधिसमुदागममनस्कारैः। कच्चिदहं सर्वसत्त्वानामग्र्यः सर्वार्थप्रतिशरणो भवेयमित्याकाङ्क्षश्च तद्रूपं वीर्यमारभते यत्सर्वगृहकलत्रभोगानुत्सृज्य तथागतशासने प्रव्रज्य एकक्षणलवमुहूर्तेन शतं बोधिसत्त्वसमाधीनां समापद्यते। तथागतशतं नानाबुद्धक्षेत्रेषु दिव्येन चक्षुषा 25 पश्यति। तेषां च निर्मिताधिष्ठानं बोधिसत्त्वाधिष्ठानं च जानाति। लोकधातुशतं च कम्पयति। तथा कायेनाक्रमते, आभया स्फरित्वा परेषामुपदर्शयति। विनेयसत्त्वशतं निर्मितशतेन परिपाचयति। कल्पशतमप्याकाङ्क्षमाणः स्थानमधितिष्ठति। कल्पशतं च पूर्वान्तापरान्ततो ज्ञानदर्शनेन प्रविशति। धर्ममुखशतं च प्रविचिनोति स्कन्धधात्वायतनादिकानां धर्ममुखानाम्। कायशतं च निर्मिमीते, कायं कायं च बोधिसत्त्वशतपरिवारमा- 30 दर्शयति। अतः परं प्रणिधानबलेन अप्रमाणा प्रभावविकुर्वणा बोधिसत्त्वानां वेदितव्या अस्मिन् प्रमुदितविहारे स्थितानाम्। प्रणिधानबलिका हि ते प्रणिधानविशेषैर्विकुर्वन्ति। तेषां

सम्यक्प्रणिधानानां न सुकरं संख्या कर्तुं यावत् कल्पकोटिनयुतशतसहस्रैः । एवमयं बोधिसत्त्वानां प्रमुदितविहारः सुविनिश्चिततश्चतुराकारचित्तोत्पादतः सम्यक्प्रणिधानवीर्यारम्भाभिनिर्हारतो विहारपरिशोधनतस्तदन्यविहारव्युत्पत्तितः कुशलमूलपरिशोधनतः उत्पत्तितः प्रभावतश्च समासनिर्देशतो वेदितव्यः। विस्तरनिर्देशतः पुनर्यथासूत्रमेव दशभूमिके प्रमुदित-
5 भूमिनिर्देशमारभ्य । याश्च दशभूमिके सूत्रे दश बोधिसत्त्वभूमयः, त इह बोधिसत्त्वपिटकमातृकानिर्देशदशबोधिसत्त्वविहारा यथाक्रमं प्रमुदितविहारमुपादाय यावत्परमविहाराद्वेदितव्याः । तत्र बोधिसत्त्वानां परिग्राह्यार्थेन भूमिरित्युच्यते । उपभोगवासार्थेन पुनर्विहार इत्युच्यते ॥

तत्र कतमे बोधिसत्त्वानामधिशीलविहारस्याकाराः, कानि लिङ्गानि, कानि निमित्तानि
10 वेदितव्यानि ? इह बोधिसत्त्वेन दशाकारेण चित्ताशयेनाशयशुद्धिः प्रतिलब्धा भवति । सर्वाचार्यगुरुदक्षिणीयाविसंवादनाध्याशयः, सहधार्मिकबोधिसत्त्वसौरत्यसुखसंवासाशयः, सर्वक्लेशोपक्लेशमारकर्माभिभवस्वचित्तवशवर्तनाशयः, सर्वसंस्कारेषु दोषाशयः, निर्वाणेऽनुशंसाशयः, कुशलानां बोधिपक्ष्याणां धर्माणां भावनासातत्याशयः, तेषामेव भावनानुकूलतया प्राविवेक्याशयः, सर्वलोकामिषसमुच्छ्र(य)लाभसत्कारनिरपेक्षाशयः, हीनयानमपहाय महायानाधिगमा-
15 शयः, सर्वसत्त्वसर्वार्थकरणाशयश्च । इतीमे दश सम्यगाशयास्तस्मिंश्चित्ते प्रवृत्ता भवन्ति यैरस्याशयः शुद्ध इत्युच्यते । एषामेव च आशयानामधिमात्रत्वात्परिपूर्णत्वाद्द्वितीयमधिशीलविहारं बोधिसत्त्वः प्रविशति आक्रमते च । अधिशीलविहारे प्रकृतिशीली भवति । स्वल्पमपि मिथ्याकर्मपथसंगृहीतदौःशील्यं न समुदाचरति, प्रागेव मध्यमधिमात्रं वा । दशसु च परिपूर्णेषु कुशलेषु ( कर्मफलेषु ) प्रकृत्या संदृश्यते । स एवं प्रकृतिशीली प्रज्ञया क्लिष्टा-
20 क्लिष्टानां कर्मपथानां दुर्गतिषु सुगतिषु यानेषु कर्मसमुदाचारहेतुफलसमुदागमव्यवस्थानं यथाभूतं प्रजानाति । विपाकनिष्यन्दफलतश्च तानि कर्माणि यथाभूतं प्रजानाति । स स्वयं च अकुशलकर्मप्रहाणे कुशलकर्मसमादाने संदृश्यते, परांश्च तत्रैव समादापयितुकामो भवति । विषमकर्मसमुदाचारदोषदुष्टं च सत्त्वधातुं सर्वमविशेषेण संपत्तिविपत्तिगतं परमार्थतो दुःखितं व्यसनस्थं विचित्रैर्व्यसनाकारैरनुकम्पमानोऽनुकम्पावैपुल्यमनुप्राप्तः प्रत्य-
25 वेक्षते । तस्य अस्मिन्नधिशीलविहारे व्यवस्थितस्य बुद्धदर्शनं कुशलमूलविशुद्धिः पूर्ववद्वेदितव्या । तत्रायं विशेषः—तद्यथा । तदेव सुवर्णं कुशलेन कर्मारेण कासीसप्रक्षिप्तं भूयस्या मात्रया विशुद्धतरं भवत्यग्नौ प्रक्षिप्यमाणम् । एवमस्य बोधिसत्त्वस्य सा कुशलमूलविशुद्धिर्वेदितव्या । अस्मिंश्च विहारे शुद्धचित्ताशयनिष्पत्तिप्रवेशतः उपपत्तिः, श्चातुर्द्वीपकश्चक्रवर्ती भवति । यद्भूयसा बाहुल्येन च दौःशील्यादकुशलेभ्यः कर्मपथेभ्यः सत्त्वान् व्यावर्तयति,
30 कुशलेषु च कर्मपथेषु समादापयति । प्रभावोऽस्य पूर्वकाद्दशगुणो वेदितव्य इति । अयं बोधिसत्त्वानामधिशीलविहारः प्रकृतिशीलतश्च सर्वाकारदौःशील्यमलापकर्षतश्च सर्वकर्मपथसर्वाकारहेतुफलज्ञानप्रतिवेधतश्च शुभे कर्मणि परसमादापनकामतश्च अनुकम्पावैपुल्य-

प्रतिलम्भतश्च सत्त्वधातुकर्मजदुःखव्यसनालोचनतश्च कुशलमूलविशुद्धितश्च उपपत्तितश्च प्रभावतश्च समासनिर्देशतो वेदितव्यः। विस्तरनिर्देशतः पुनर्यथासूत्रमेव यथा दशभूमिके। विमलायां भूमौ दौःशील्यापगतत्वाद्विमला भूमिरित्युच्यते। दौःशील्यमलापगतत्वादेवाधिशीलविहार इति। या तत्र विमला भूमिः, सेह अधिशीलविहारो वेदितव्यः॥

तत्र कतमे बोधिसत्त्वानामाकाराः, कानि लिङ्गानि, कानि निमित्तान्यधिचित्तविहारस्य? इह बोधिसत्त्वेन पूर्वमेवाधिशीलविहारे ते दश शुद्धाशया मनसिकृता भवन्ति जुष्टाः प्रतिविद्धाः, दशभिरपरैस्तेषां चित्ताशयमनसिकाराणामधिमात्रत्वात्परिपूर्णत्वादधिशीलविहारं समतिक्रम्य अधिचित्तविहारमनुप्रविशति शुद्धो मे दशभिराकारैश्चित्ताशय इति मनसिकारेण। अभव्यश्चाहं तस्माद्दशाकाराच्छुद्धाशयात्परिहाणाय इति मनसिकारेण। सर्वास्रवसास्रवेषु मे धर्मेषु चित्तं न प्रस्कन्दति प्रतिकूलता संतिष्ठते इति मनसिकारेण। तत्प्रतिपक्षभावनायां च मे विज्ञानं संस्थितमिति मनसिकारेण। अभव्यश्चाहमस्मात्प्रतिपक्षात्पुनः परिहाणाय इति मनसिकारेण। अभव्यश्चाहमेवं दृढप्रतिपक्षस्तैः सर्वास्रवसास्रवैर्धर्मैः सर्वमारैश्चाभिभवितुमिति मनसिकारेण। असंलीनं च मे मानं संप्रवर्तते सर्वबुद्धधर्मेषु इति मनसिकारेण। सर्वदुष्करचर्यासु च मे नास्ति व्यथा इति मनसिकारेण। अधिमुक्तं च मे महायाने चित्तमेकान्तेन न तदन्यहीनयानेषु इति मनसिकारेण। सर्वसत्त्वार्थक्रियाभिरतं च मे चित्तमिति मनसिकारेण। एभिर्दशभिश्चित्ताशयमनसिकारैः प्रविशति। अधिचित्तविहारस्थितो बोधिसत्त्वः सर्वसंस्कारानादीनवाकारैः प्रविशति। अधिचित्तविहारस्थितो बोधिसत्त्वः सर्वसंस्कारानादीनवाकारैर्विचित्रैर्विदूषयति, तेभ्यश्च मानं समुद्वेजयति। बुद्धज्ञाने च अनुशंसादर्शी भवति विचित्रैरनुशंसाकारैः, तत्र च स्पृहाजातो भवति। घनरसेन च्छन्देन सत्त्वधातुं दुःखितं व्यवलोकयति चित्रैर्दुःखाकारैः, तेषु च सत्त्वेष्वपेक्षाचित्तो भवति अर्थप्रतिशरणचित्तः। सर्वसंस्कारेष्वप्रमत्तः। बोधायोत्तप्तवीर्यः। सत्त्वेषु विपुलकरुणाशयः। तेषां सत्त्वानामत्यन्तं दुःखविमोक्षोपायं सर्वक्लेशानावरणज्ञानमेव पश्यति। तस्य च विमोक्षस्य समुदागमाय धर्मधातौ सर्वविकल्पप्रपञ्चानां संक्लेशोत्पत्तिप्रतिपक्षं प्रज्ञां पश्यति। तस्य च ज्ञानालोकस्य निष्पत्तये सम्यक्समाधिं पश्यति। तं च ध्यानसमाधिसमापत्तिनिर्हारं बोधिसत्त्वपिटकश्रवणपूर्वकं श्रवणनिदानं पश्यति। दृष्ट्वा च महता वीर्यारम्भेण श्रुतपर्येष्टिमापद्यते। सद्धर्मश्रवणहेतोर्नास्ति तद्द्रविणं परिष्कारमाध्यात्मिकबाह्यं वस्तु यन्न परित्यजति। नास्ति सा गुरुपरिचर्या यां नाभ्युपगच्छति। नास्ति सा कायोत्पीडा यां नाभ्युपगच्छति। स प्रीततरो भवति एकचतुष्पदगाथाश्रवणेन, न त्वेव त्रिसाहस्रे पूर्णप्रतिमेन महारत्नराशिना। प्रीततरो भवति एकधर्मपदश्रवणेन सम्यक्संबुद्धोपनीतेन बोधिसत्त्वचर्यापरिशोधकेन, न सर्वशक्रत्वब्रह्मत्वलोकपालत्वचक्रवर्तित्वसमुच्छ्रयप्रतिलम्भैः। सचेदेनं कश्चिदेवं वदेत्—एवमहमिदं धर्मपदं सम्यक्संबुद्धोपनीतं बोधिसत्त्वचर्यापरिशोधकं ते श्रावयिष्यामि, सचेन्महत्यामग्निखदायामात्मानं प्रक्षिपसि, महान्तं वा दुःखोपक्रममुपादत्स इति, श्रुत्वा

अस्यैवं भवेत्—उत्सहाम्यहमस्य धर्मपदस्यार्थे पूर्ववत् त्रिसाहस्रमहासाहस्रप्रतिमायामपि अग्निखदायां ब्रह्मलोकादात्मानमुत्स्रष्टुम्, प्रागेव प्राकृतस्वरायाम्। नारकदुःखसंवासैरप्यस्माभिर्बुद्धधर्माः पर्येषितव्याः, प्रागेव प्राकृतैर्दुःखोपक्रमैरिति। एवंरूपेण वीर्यारम्भेण धर्मान् पर्येष्य एवं योनिशो मनसिकरोति—यथा धर्मानुधर्मप्रतिपत्तिं बुद्धधर्मा अनुगताः, न 5 व्यञ्जनस्वरमात्रविशुद्धिरिति विदित्वा। तदेव श्रुतं निश्रित्य धर्मनिमित्तानि सम्यगालम्बनीकुर्वन् विविक्तं कामैर्विस्तरेण प्रथमं द्वितीयं तृतीयं चतुर्थं ध्यानं लौकिकं चतस्र आरूप्यसमापत्तीर्लौकिकाः चत्वार्यप्रमाणानि पञ्च च अभिज्ञा उपसंपद्य विहरति। स तैर्बहुलं विहृत्य तानि ध्यानानि समाधीन् समापत्तीर्व्यावर्त्य प्रणिधानवशेन कामधातौ यत्र सत्त्वार्थं बोधिपक्ष्यधर्मपरिपूरिं च पश्यति, तत्रोपपद्यते। न त्वेवास्य तद्वशेनोपपत्तिर्भवति। तस्य कामवीत- 10 रागत्वात् कामबन्धनानि प्रहीणानि भवन्ति, ध्यानसमाधिसमापत्तिव्यावर्तनत्वाद्भवबन्धनानि। अधिमुक्तिचर्याभूमावेवास्य पूर्वमेव धर्मतथताधिमोक्षाद् दृष्टिकृतबन्धनानि प्रहीणानि भवन्ति। मिथ्यारागद्वेषमोहा अस्य अत्यन्तं न प्रवर्तन्ते। तस्य बुद्धदर्शनं विस्तरेण कुशलमूलविशुद्धिः पूर्ववद्वेदितव्या। तत्रायं विशेषः। तद्यथा—तदेव सुवर्णं कुशलस्य कर्मारस्य हस्तगतं प्रक्षीणमलकषायमपि समधरणमवतिष्ठते तुल्यमानम्। एवमस्य सा कुशलमूलविशुद्धिर्वेदि- 15 तव्या। उपपत्तितश्च शक्रो भवति देवेन्द्रो यद्भूयसा कुशलः सत्त्वानां कामरागविनिवर्तनतायै। प्रभावेऽपि यत्र पूर्वके विहारे सहस्रमाख्यातम्, तत्रेह शतसहस्रं वेदितव्यम्। अयं बोधिसत्त्वानामधिचित्तविहारः। चित्तमनस्कारनिष्पत्तिप्रवेशतश्च संस्कारसत्त्वधातुमहाबोधिसम्यक्प्रतिवेधतश्च सत्त्वदुःखविमोक्षोपायसम्यक्पर्येषणतश्च महागौरवधर्मपर्येषणतश्च धर्मानुधर्मप्रतिपत्तिलौकिकध्यानसमाधिसमापत्त्यभिज्ञाभिनिर्हारविहारतश्च, तद्व्यावर्तनं प्रणिधाय 20 यत्र कामोपपत्तितश्च कुशलमूलविशुद्धितश्च उपपत्तितश्च प्रभावतश्च समासनिर्देशतो वेदितव्यः। विस्तरनिर्देशः पुनर्यथासूत्रं तद्यथा दशभूमके प्रभाकर्यां भूमौ। श्रुताकारधर्मालोकावभाससमाध्यालोकावभासप्रभावितत्वादस्या भूमेः प्रभाकरीत्युच्यते। अध्यात्मं चित्तविशुद्धिमुपादाय सा प्रभा भवति। तस्मात् स विहारोऽधिचित्त इत्युच्यते। येनैवार्थेन प्रभाकरी भूमिः, तेनैवार्थेनाधिचित्तविहारो वेदितव्यः॥

25 तत्र कतमो बोधिसत्त्वानां बोधिपक्ष्यप्रतिसंयुक्तोऽधिप्रज्ञविहारः? इह बोधिसत्त्वेन पूर्वमेव अधिचित्तविहारे दश धर्मालोकप्रवेशाः श्रुतपर्येष्टिमधिपतिं कृत्वा प्रतिलब्धा भवन्ति, येषामधिमात्रत्वात्परिपूर्णत्वादधिचित्तविहारमतिक्रम्य प्रथममधिप्रज्ञविहारं प्रविशति। ते पुनर्दश धर्मालोकप्रवेशा ग्रन्थतो यथासूत्रमेव वेदितव्याः। येन प्रज्ञप्यन्ते यत्र च प्रज्ञप्यन्ते येन च प्रज्ञप्यन्ते, तेन च यत्समाः परमार्थतः, यस्य च संक्लेशाद् व्यवदानाच्च संक्लिश्यन्ते 30 विशुद्ध्यन्ते च, यत्प्रतिसंयुक्तेन च क्लेशेन संक्लिश्यन्ते, येन च अनुत्तरया विशुद्ध्या विशुध्यन्ते इत्ययं समासार्थस्तेषां धर्मालोकनिर्देशानां वेदितव्यः। स तस्मिन् विहारे व्यवस्थितोऽभेद्याशयतापूर्वंगमैर्यथासूत्रमेव दशाकारेण ज्ञानपरिपाकेन ज्ञानपरिपाचकैर्धर्मैः समन्वागतः संवृत्तो

(संवृतो) भवति तथागतकुले तदात्मकधर्मप्रतिलम्भात् सर्वाकारां बोधिसत्त्वापेक्षामधिपतिं कृत्वा स्मृत्युपस्थानप्रमुखान् सप्तत्रिंशद्बोधिपक्ष्यान् धर्मान् भावयति यथासूत्रमेव । तस्य तान् धर्मानुपायपरिग्रहेण भावयतः सत्कायदृष्टिः सुसूक्ष्मापि स्कन्धधात्वायतनाद्यभिनिवेशसर्वेञ्जितानि च अत्यन्तासमुदाचारतः प्रहीयन्ते । तेषां प्रहाणाद् यानि तथागतविवर्णितानि कर्माणि तानि सर्वेण सर्वं नाध्याचरति । यानि पुनस्तथागतवर्णितानि तानि सर्वाण्यनुवर्तन्ते यथावत् । तथाभूतश्च भूयस्या मात्रया स्निग्धमृदुकर्मण्यचित्तश्च भवति, तथा चित्राकारसुविशुद्धचित्तश्च कृतज्ञकृतवेदिप्रमुखैस्तदाशयानुगुणैर्विचित्रैः शुक्लधर्मैः समन्वागतो भवति । उत्तरि च भूमिपरिशोधकानि कर्माणि समन्वेषमाणो महावीर्यारम्भप्राप्तो विहरति । तस्य तन्निदानमाशयाध्याशयाधिमुक्तिधातुः परिपूर्यते । तन्निदानं च असंहार्यो भवति, अविकम्प्यः सर्वतीर्थ्यमारशासनप्रत्यर्थिकभूतैः । पूर्ववच्च बुद्धदर्शनम् । विस्तरेण कुशलमूलविशुद्धिर्वेदितव्या । तत्रायं विशेषः । तद्यथा—तदेव सुवर्णं कुशलेन कर्मारेण अलंकारविधिकृतमसंहार्यं भवत्यकृताभरणैर्जातरूपैः, एवमस्य बोधिसत्त्वस्य तानि कुशलमूलान्यसंहार्याणि भवन्ति तदन्यबालविकारस्थितैर्बोधिसत्त्वकुशलमूलैः । तद्यथा मणिरत्नं मुक्तालोकमसंहार्यं भवति तदन्यैर्मणिभिः, सर्ववातोदकवृष्टिभिश्च अनाच्छेद्यप्रभं भवति, एवमयं बोधिसत्त्वोऽसंहार्यो भवति सर्वश्रावकप्रत्येकबुद्धैः, अनाच्छेद्यप्रज्ञालोकश्च भवति सर्वमारप्रत्यर्थिकैः । उपपत्तितश्च सुयामो भवति देवराजः कुशलः सत्त्वानां सत्कायदृष्टिविनिवर्तनतायै । प्रभावे च यत्र पूर्वविहारे शतसहस्रगुणमाख्यातं तत्र अस्मिन् कोटीसमाख्यातं वेदितव्यम् । अयं बोधिसत्त्वानां बोधिपक्ष्याधिप्रज्ञविहारः धर्मालोकप्रवेशनिष्पत्तिप्रतिलम्भतश्च ज्ञानपरिपाचनतश्च बोधिपक्ष्यधर्मनिषेवणतश्च सत्कायदृष्ट्यादिभिः सर्वाभिनिवेशेञ्जितप्रहाणतश्च प्रतिषिद्धानुज्ञातकर्मविवर्जननिषेवणतश्च तन्निदानचित्तमार्दवतश्च तदनुकूलगुणसमृद्धितश्च भूमिपरिशोधककर्मपर्येष्टिमारम्य महावीर्यारम्भतश्च तन्निदानमाशयाध्याशयाधिमुक्तिविशोधनतश्च तन्निदानं सर्वशासनप्रत्यर्थिकासंहार्यतश्च कुशलमूलविशुद्धितश्च उपपत्तितश्च प्रभावतश्च समासनिर्देशतो वेदितव्यः । विस्तरनिर्देशतः पुनस्तद्यथा दशभूमकेऽर्चिष्मतीभूमिनिर्देशबोधिपक्ष्या धर्माः । तस्यां भूमौ ज्ञानार्चिर्भूता सम्यग्धर्मदेशना प्रज्ञावभासकारका लोकानाम् । तस्मात्सा भूमिरर्चिष्मतीत्युच्यते । सैव चेह बोधिपक्ष्याधिप्रज्ञविहार इत्युच्यते ॥

तत्र कतमो बोधिसत्त्वानां सत्यप्रतिसंयुक्तो द्वितीयोऽधिप्रज्ञविहारः ? इह बोधिसत्त्वः पूर्वकेऽधिप्रज्ञविहारे या दश विशुद्धाशयसमताः प्रतिलब्धाः, तासामधिमात्रत्वात्परिपूर्णत्वाद् द्वितीयमधिप्रज्ञविहारं प्रविशति । दश विशुद्धाशयसमता यथाश्रुतं ग्रन्थतो वेदितव्याः । असमैश्च बुद्धैर्बुद्धाः समाः तदन्यसत्त्वधातुसमतिक्रान्ताः, यैश्च धर्मैर्यथासमा इत्ययं समासार्थो विशुद्धाशयसमतानां वेदितव्यः । सोऽस्मिन् व्यवस्थितो भूयो ज्ञानवैशेषिकतां प्रार्थयमानश्चत्वार्यार्यसत्यानि दशभिराकारैर्यथाभूतं प्रजानाति । ग्रन्थतो यथासूत्रमेव सर्वं वेदितव्यम् । परसंज्ञापनतां प्रत्यात्मज्ञानतां तदुभयाधिष्ठानतां चारभ्य यच्च देश्यते । सूत्रविनयमातृका-

मारभ्य येन च देश्यते । प्रत्युत्पन्नदुःखात्मकतां हेतुतश्च अनागतदुःखप्रभवतां हेतुक्षयात् तत्क्षयानुत्पादतां तत्प्रहाणोपायनिषेवणतां चारभ्य यथा देश्यते । इत्ययं समासार्थस्तस्य दशाकारस्य चतुरार्यसत्यज्ञानस्य वेदितव्यः । एवं सत्यकुशलः सर्वं च संस्कारगतं प्रज्ञया सम्यग्विदूषयति, सत्त्वधातौ च करुणाशयं विवर्धयति, पूर्वान्तापरान्ततश्च बालसत्त्व-
5 मिथ्याप्रतिपत्तिं सम्यक्प्रतिविध्यति । तेषां च विमोक्षाय महापुण्यज्ञानसंभारपरिग्रहे चित्तं प्रणिधत्ते, तद्गताशयश्च समुदानयति । स्मृतिमतिगतिप्रमुखैश्च प्रभूतैर्विचित्रैर्गुणैः समृद्धश्च अन्यमनसिकारापगतश्चित्रैः परिपाचनोपायैः सत्त्वान् परिपाचयति । यानि च सत्त्वानुग्राहकाणि लौकिकानि लिपिशास्त्रमुद्रागणनादीनि यथासूत्रमेव शिल्पकर्मस्थानानि, तानि सर्वाण्यभिनिर्हरति । सत्त्वकरुणतया अनुपूर्वेण यावद्बोधिप्रतिष्ठापरार्थं लौकिकव्यवहारानु-
10 कूलतया दारिद्र्यनाशोपायतया धातुवैषम्यमनुष्यामनुष्योपसंहृतोपद्रवप्रशमनतया अनवद्य-क्रीडारतिवस्तूपसंहारतोऽधर्मरतिव्यावर्तनतया संनिवासोपकरणार्थिनामल्पकृच्छ्रेण संनिवासो-पकरणोपसंहारणतया राजचौराद्युपद्रवपरित्राणतया स्थानास्थानप्रयोगानुज्ञाप्रतिषेधनतया माङ्गल्यामाङ्गल्यवस्त्वादानत्यागसंनियोजनतया दृष्टे धर्मे परस्परानभिद्रोहसंपरायाविपरीताभ्यु-दयमार्गोपदेशनतया इत्ययं तेषां सत्त्वानुग्राहकाणां शिल्पकर्मस्थानानां समासार्थो वेदितव्यः ।
15 सर्वमन्यत्पूर्ववत् । तत्रायं विशेषः । तद्यथा तदेव सुवर्णं कुशलेन कर्मारेण मुसारगल्वसृष्टं प्रत्यर्पितमसमानतया असंहार्यं भवति तदन्यैः सुवर्णैः, एवमयं बोधिसत्त्वोऽसंहार्यो भवति सर्वश्रावकप्रत्येकबुद्धैस्तदन्यभूमिस्थैश्च बोधिसत्त्वैः । तद्यथा चन्द्रसूर्यनक्षत्राणामाभा असंहार्या च भवति सर्ववातमण्डलैः, सर्ववातवाहसाधारणा च भवति, एवमेवास्य बोधिसत्त्वस्य सा प्रज्ञा असंहार्या भवति सर्वश्रावकप्रत्येकबुद्धैः, लौकिकक्रियासाधारणा च भवति । उपपत्तितः
20 संतुषितो भवति देवराजः कुशलः सर्वतीर्थ्यविनिवर्तनतायै । प्रभावश्च कोटिशतसंख्या-निर्देशतो वेदितव्यः । अयं बोधिसत्त्वानां सत्यप्रतिसंयुक्तोऽधिप्रज्ञविहारः । शुद्धाशयसमता-निष्पत्तिप्रवेशतश्च उपायसत्यव्यवचारणाप्रतिविवर्धनतश्च सर्वसंस्कारविदूषणसत्त्वकारुण्य-ज्ञानसंभारोपचयप्रणिधानप्रयोगतश्च स्मृतिमतिगत्यादिगुणवृद्धितश्च अनन्यमनसिकारसर्वा-कारसत्त्वपरिपाचनाभियोगतश्च लौकिकशिल्पाभिनिर्हारतश्च कुशलमूलविशुद्धित उपपत्तितः
25 प्रभावतश्च समासनिर्देशतो वेदितव्यः । विस्तरनिर्देशतः पुनस्तद्यथा दशभूमिके सुदुर्जयायां भूमौ । सत्येषु निश्चयज्ञानं सुदुर्जयम् । तच्चेह परिदीपितम् । तस्मात्सा भूमिः सुदुर्जयेत्युच्यते । तेनैव चार्थेन सत्यप्रतिसंयुक्तोऽधिप्रज्ञविहारो द्रष्टव्यः ॥

तत्र कतमो बोधिसत्त्वानां प्रतीत्यसमुत्पादप्रतिसंयुक्तोऽधिप्रज्ञविहारः ? इह बोधि-सत्त्वेन पूर्वमेव सत्यप्रतिसंयुक्तेऽधिप्रज्ञविहारे दश धर्मसमताः प्रतिलब्धा भवन्ति ।
30 यथासूत्रं ग्रन्थतस्ता वेदितव्याः । तासामधिमात्रत्वात्परिपूर्णत्वादिमं विहारमनुप्रविशति । सर्वधर्मेषु पारमार्थिकस्य सतः स्वभावस्य निर्निमित्तसमतया । अभिलापाभिसंस्कार-प्रतिभासस्यालक्षणसमतया । तस्यैवालक्षणत्वात्स्वयमजातसमतया । स्वयं हेतुतश्चानुत्पन्न-

त्वादत्यन्तमादिशान्तसमतया। विद्यमानस्य वस्तुग्राहकस्य निष्प्रपञ्चसमतया। आदान-
त्यागाभिसंस्कारविगमसमतया। तस्यैव क्लेशदुःखसंक्लेशवियोगाय विविक्तसमतया।
विकल्पितस्य ज्ञेयस्वभावस्य मायानिर्मितोपमसमतया। निर्विकल्पज्ञानगोचरस्य स्वभावस्य
भावाभावाद्वयसमतया। इत्ययं तासां दशानां धर्मसमतानामर्थविभागो वेदितव्यः।
सोऽस्मिन् विहारे स्थितः सत्त्वेषु संवृद्धकरुणो बोधौ तीव्रच्छन्दाभिलाषजातो लोकानां संभवं 5
च विभवं च सर्वाकारया प्रतीत्यसमुत्पादसम्यग्व्यवचारणतया व्यवचारयति प्रजानाति,
प्रतीत्यसमुत्पादज्ञानसंनिश्रितं चास्य विमोक्षमुखत्रयमाजातं भवति शून्यतानिमित्ताप्रणि-
हितम्। ततोनिदानं चास्य आत्मपरकारकवेदकभावाभावसंज्ञा न प्रवर्तन्ते। स एवं
परमार्थकुशलः सत्त्वसापेक्षो योनिशः प्रतिविध्यति। क्लेशसंप्रयोगात्प्रत्ययसामग्र्याच्च संस्कृतं
प्रकृतिदुर्बलमात्मात्मीयविरहितमनेकदोषदुष्टं प्रवर्तते न विना क्लेशसंयोगप्रत्ययसामग्रीम्। 10
तेन मया क्लेशसंयोगप्रत्ययसामग्री च विकलीकर्तव्या, आत्मरक्षार्थं न च सर्वेण सर्वं संस्कृतं
व्युपशमयितव्यं सत्त्वानुग्रहार्थम्। तथैव ज्ञानकारुण्यानुगतस्य अस्मिन् विहारेऽसङ्गज्ञानाभि-
मुखो नाम प्रज्ञापारमिताविहारोऽभिमुखीभवति, येनायं सर्वलौकिकचर्यास्वसक्तश्चरति।
स च विहारो या तीक्ष्णा सप्तम्यां भूमौ प्रायोगिकचर्यापर्यन्तगता बोधिसत्त्वक्षान्तिः, तया
आनुलोमिक्या क्षान्त्या संगृहीतो वेदितव्यः। सोऽसङ्गज्ञानाभिमुखः प्रज्ञापारमिताविहारा- 15
भिमुख्याद्बोध्याहारकांश्च प्रत्ययानाहरति लौकिकान्, न च संस्कृतसंवासेन संवसति।
प्रशमे च शान्तदर्शी भवति, न च तत्रावतिष्ठते। तस्यैवमुपायप्रज्ञाज्ञानानुगतस्य अवतार-
शून्यतासमाधिप्रमुखानि दश समाधिमुखशतसहस्राण्यामुखीभवन्ति। यथा शून्यतासमाधिः,
एवमप्रणिहितानिमित्तसमाधयो वेदितव्याः। तेषामामुखीभावादभेद्याशयश्च भवति, सर्वाकारा-
द्बुद्धशासनादसंहार्यश्च भवति सर्वतीर्थ्यमारशासनप्रत्यर्थिकः। शेषं पूर्ववत्। तत्रायं विशेषः। 20
तद्यथा तदेव सुवर्णं कुशलेन कर्मारेण वैडूर्यमणिरत्नसृष्टं प्रत्यर्पितमसंहार्यं भवति तदन्यैः सर्व-
जातरूपैः, एवमस्य बोधिसत्त्वस्य तानि कुशलमूलानि विशुद्धतराणि भवन्ति, असंहार्याणि।
पूर्ववत्। अयं प्रतीत्यसमुत्पादप्रतिसंयुक्तोऽधिप्रज्ञविहारः। धर्मसमतापरिनिष्पत्तिप्रवेशतश्च
प्रतीत्यसमुत्पादावबोधविमोक्षमुखसंततश्च सर्वमिथ्यासंज्ञासमुदाचारतश्च उपायसंस्कारपरि-
ग्रहतश्च असङ्गज्ञानाभिमुखप्रज्ञापारमिताविहाराभिमुखश्च अप्रमाणसमाधिप्रतिलम्भतश्च 25
अभेद्याशयप्रतिलम्भतश्च शासनादसंहार्यतश्च कुशलमूलविशुद्धितः उपपत्तितः प्रभावतश्च
समासनिर्देशतो वेदितव्यः। विस्तरतस्तद्यथाभिमुख्यां भूमौ। असङ्गज्ञानाभिमुखस्य प्रज्ञापार-
मिताविहाराभिमुख्यादभिमुखीत्युच्यते। तेनैवार्थेन अयं विहारो वेदितव्यः॥

तत्र कतमो बोधिसत्त्वानां साभिसंस्कारः साभोगो निर्निमित्तो विहारः? इह बोधि-
सत्त्वेन अनन्तरेऽधिप्रज्ञविहारे दशोपायप्रज्ञाभिनिर्हृताः सर्वसत्त्वसाधारणा लौकिकाः सर्व- 30
लोकासाधारणाश्च मार्गान्तरारम्भविशेषाः प्रतिलब्धा भवन्ति, येषामधिमात्रत्वात्परिपूर्णत्वात्
सप्तमं विहारमनुप्रविशति। तेषां यथासूत्रमेव ग्रन्थविस्तरो वेदितव्यः। लौकिकसंपत्तिसंव-

र्तेकं पुण्यपरिग्रहमारभ्य, सत्त्वेषु हितसुखिताशयमारभ्य, बोधाय पुण्यसंभारबोधिपक्ष्यधर्मो-
त्तरोत्कर्षमारभ्य, श्रावकासाधारणताप्रत्येकबुद्धासाधारणतामारभ्य, सत्त्वकर्मधातुमारभ्य,
लोकधातुमारभ्य, तथागतकायवाक्चित्तज्ञानमारभ्य, इत्ययं तेषामुपायप्रज्ञानिर्हृतानां
मार्गान्तराणामारम्भविशेषाणामधिकारार्थतः समासतो वेदितव्यः । स एभिर्युक्तोऽप्रमाणमसं-
5 ख्येयं तथागतविषयं प्रतिविध्यति, तत्समुत्थानाय च अनाभोगनिर्निमित्ताकल्पाविकल्पन-
तया अप्रमाणबुद्धविषयं पश्यन् निरन्तरं निश्छिद्रं प्रयुज्यते सर्वेर्यापथचारविहारमनसि-
कारेषु । नास्य सर्वावस्थागतस्य मार्गविप्रवासितत्वं भवति । तस्य चित्तक्षणे दशपारमिता-
प्रमुखाः सर्वे बोधिपक्ष्या धर्माः परिपूर्यन्ते विशेषेण, अन्येषु तु विहारेषु न तथा । प्रथमे प्रमु-
दितविहारे प्रणिधानाध्यालम्बनतया, द्वितीये चित्तदौःशील्यमलापकर्षणतया, तृतीये प्रणि-
10 धानविवर्धनधर्मालोकप्रतिलम्भनतया, चतुर्थे मार्गावतारणतया, पञ्चमे लौकिकक्रियावतारण-
तया, षष्ठे गम्भीरप्रवेशतया । तस्मिन् पुनः सप्तमे विहारे सर्वबुद्धधर्मसमुत्थापनतया बोध्य-
ङ्गानि परिपूर्यन्ते बोधिसत्त्वप्रायोगिकचर्यापरिपूरिसंग्रहात्, अस्य विहारस्य ज्ञानाभिज्ञाचर्या-
विशुद्धाष्टमविहाराक्रमणाच्च । तथा हि बोधिसत्त्वोऽस्य विहारस्यानन्तरमष्टमं विहारं प्रविशति ।
स च विहार एकान्तविशुद्धः । इमे तु सप्त विहारा व्यामिश्राः । विशुद्धविहारपूर्वंगमत्वाद-
15 संक्लिष्टाः तदसंप्राप्तत्वात् संक्लिष्टचर्यापतिता वक्तव्याः । तस्यास्मिन् विहारे सर्वे रागादिप्रमुखाः
क्लेशाः प्रहीयन्ते । स न सक्लेशो न निःक्लेशो वेदितव्यः, असमुदाचाराद्बुद्धज्ञानाभिलाषाच्च ।
तथाभूतस्य अस्य अध्याशयपरिशुद्धमप्रमाणं कायवाङ्मनस्कर्म प्रवर्तते । स यानि
तथागतवर्णितानि कर्माणि । पूर्ववत् । तस्य पञ्चमविहाराभिनिर्हृतानि लौकिकानि शिल्पज्ञाना-
नीह परिपूर्यन्ते । आचारसंमतश्च भवति त्रिसाहस्रमहासाहस्रे, स्थापयित्वा ऊर्ध्वविहारस्थान्
20 बोधिसत्त्वान् तथागतांश्च । न कश्चिदस्याशयप्रयोगाभ्यां समो भवति । सर्वे च ध्यानादयो
बोधिपक्ष्या धर्मा आमुखीभवन्ति भावनाकाराभिमुखतया, न तु विपाकस्थानतः,
तद्यथा अष्टमे विहारे । स तथा प्रयुक्तः सुनिश्चितविषयसुविचितसमाधिप्रमुखाणि दश
समाधिशतसहस्राण्यभिनिर्हरति बोधिसत्त्वसमाधीनाम् । तेषां च लाभात्समतिक्रान्तो भवति
श्रावकप्रत्येकबुद्धसमाधिविषयम् । स एवं सर्वक्लेशविविक्तेन दुर्विज्ञातेन सर्वविकल्पप्रचारा-
25 पगतेन कायवाङ्मनस्कर्मणा विहरति । न चोत्तरिविशेषपरिमार्गणाभियोगमुत्सृजति
सत्त्वावेक्षया बोधिपरिपूरणार्थम् । तस्याप्रमाणं सर्वनिमित्तापगतं कायवाङ्मनस्कर्म प्रवर्तते
सुपरिशोधितमनुत्पत्तिकधर्मक्षान्त्यवभासितम् । अस्मिन् विहारे स्वबुद्धिविषयतया सर्वश्रावक-
प्रत्येकबुद्धविषयसमतिक्रमः । तदन्येषु तु षट्सु बुद्धधर्माध्यालम्बनतया । षष्ठे विहारे
बोधिसत्त्वो निरोधं समापद्यते । अस्मिंस्तु प्रतिक्षणं समापद्यते । इदं चास्य अत्यद्भुतं कर्म
30 अचिन्त्यम्—यद्भूतकोटीविहारेण च विहरति, न च निरोधं साक्षात्करोति । स तमेवोपाय-
ज्ञानाभिनिर्हारमधिपतिं कृत्वा सर्वसत्त्वासाधारणां बोधिसत्त्वचर्यां चरति, लौकिकप्रतिभासां
च अतन्मयीं च । यथासूत्रमेव । तस्य पिण्डार्थे पुण्यक्रियामारभ्य कलत्रपर्षत्परिग्रहमभि-

(निर्)वृत्तिविशेषप्रार्थनासमारम्भं विमोक्षत्रयविहारणतां हीनयानाधिमुक्तोपायविनयनतां परचित्तानुवर्तनतां महाजनकायव्यावर्तनतां चारभ्य । शेषं पूर्ववत्। तत्रायं विशेषः। वशवर्ती च भवति देवराजः। कुशलः श्रावकप्रत्येकबुद्धाभिसमयोपसंहारेषु। प्रभावः कोटीशतसहस्रसंख्यानिर्देशतो वेदितव्यः। अयं साभोगो निर्निमित्तो विहारः। उपायप्रज्ञाभिनिर्हृतमार्गान्तरारम्भविशेषनिष्पत्तिप्रवेशतश्च तथागतविषयसमुत्थानप्रतिवेधनिरन्तरप्रयोगतश्च प्रतिक्षणं सर्वबोधिपक्ष्यधर्मसमुदागमतश्च क्लिष्टाक्लिष्टव्यवस्थानतश्च प्रायोगिकचर्यापरिपूरिसंग्रहतश्च आशयशुद्धकर्मप्रवृत्तिमधिकृत्य सर्वलौकिकशिल्पकर्मादिपरिपूरणतश्च अप्रमेयश्रावकप्रत्येकबुद्धासाधारणसमाधिप्रतिलम्भतश्च प्रतिक्षणं निरोधसमापत्तितश्च सर्वसत्त्वासाधारणलोकचर्याचरणतश्च। तद्यथा दूरंगमायां भूमौ। बोधिसत्त्वप्रायोगिकचर्यापरिपूरिसंगृहीतत्वाद्दूरंगमेत्युच्यते। तेनैवमर्थेन विहारो वेदितव्यः॥

तत्र कतमो बोधिसत्त्वानामनाभोगो निर्निमित्तो विहारः? इह बोधिसत्त्वेन प्रथमेऽनन्तरे विहारे दशाकारं सर्वधर्मपरमार्थावतारज्ञानं प्रतिलब्धं भवति। त्रिष्वध्वसु यथायोगमाद्यनुत्पन्नतामजन्मतामलक्षणतामारभ्य तदन्यहेतुभावाविनाशतां चारभ्य परमार्थतो निरभिलाप्यस्वभावे वस्तुनिरभिलापाभिसंस्कारप्रतिभासस्य स्वभावस्य लक्षणेन हेतुभावेन चाविद्यमानस्य तस्यैव संक्लेशात्मना अप्रवृत्तितां च अनिवृत्तितां चारभ्य तदज्ञानमिथ्याभिनिवेशहेतुकां च तस्मिन् विद्यमाने वस्तुनि निरभिलाप्ये आदिमध्यपर्यवसानसर्वकालसंक्लेशसमतां चारभ्य तथतासम्यक्प्रवेशनिर्विकल्पसमतया च तत्संक्लेशापनयमारभ्य। इत्यस्य ज्ञानस्य दशाकारस्य अधिमात्रत्वात्परिपूर्णत्वादिममष्टमं परिशुद्धं विहारमवतरति। इहस्थश्च अनुत्पत्तिकेषु धर्मेषु प्रवरां बोधिसत्त्वक्षान्तिं सुविशुद्धां लभते। सा पुनः कतमा? चतसृभिः पर्येषणाभिरयं बोधिसत्त्वः सर्वधर्मान् पर्येष्य यदा चतुर्भिरेव यथाभूतपरिज्ञानैः परिजानाति, तदा सर्वमिथ्याविकल्पाभिनिवेशेष्वपनीतेषु सर्वधर्माणां दृष्टे च धर्मे सर्वसंक्लेशानुत्पत्त्यनुकूलतां पश्यति। संपराये च सर्वेण सर्वं निरवशेषतोऽनुत्पत्तिं पश्यति तेषामेव पूर्वमिथ्याविकल्पाभिनिवेशहेतुसमुत्पन्नानां धर्माणाम्। ताः पुनश्चतस्रः पर्येषणा यथापूर्वं निर्दिष्टास्तत्त्वार्थपटले। चत्वारि च यथाभूतपरिज्ञानानि। तान्यधिमुक्तिचर्याविहारमुपादाय यावत्साभोगनिर्निमित्ताद्विहारान्न सुविशुद्धानि भवन्ति। अस्मिंस्तु विहारे परिशुद्धानि भवन्ति। तस्मात्स बोधिसत्त्वोऽनुत्पत्तिकेषु धर्मेषु क्षान्तिप्रतिलब्ध इत्युच्यते। स तस्याः क्षान्तेर्लाभाद्गम्भीरं बोधिसत्त्वविहारमनुप्राप्नोति। तस्य पूर्वके ये निर्निमित्ते विहारे चत्वारोऽप्रक्षालाः, ते प्रहीणा भवन्ति। य आभोगाभिसंस्कारः स प्रहीणो भवति। उत्तरे च विशुद्धिविहारे औत्सुक्यं प्रहीणं भवति। सर्वाकारसत्त्वार्थक्रियाशक्तावौत्सुक्यं प्रहीणं भवति। सूक्ष्मसंज्ञासमुदाचारश्च प्रहीणो भवति। तस्मात्स विहारः सुपरिशुद्ध इत्युच्यते। तस्य च तस्मिन् गम्भीरे विहारेऽभिरतस्य तस्मिन् धर्ममुखस्रोतसि तथागतसंचोदनासमादापनाभिनिर्हारमुखज्ञानाभिज्ञाकर्मोपसंहारोऽप्रमेयः। तथा संचोदितस्य

च अप्रमाणकायविभक्तिज्ञानाभिनिर्हारो दशवशिताप्राप्तिश्च यथासूत्रमेव विस्तरेण वेदितव्याः । वशिताप्राप्तः स यावदाकाङ्क्षति तावत्तिष्ठति । यांश्च ध्यानविमोक्षादिचित्तविहारानाकाङ्क्षति तेषु विहरति । संकल्पमात्रेणैवास्य सर्वभोजनादिपरिष्कारसंपद्भवति । सर्वशिल्पकर्मस्थानेषु चास्य यथाकामं सुप्रचारता भवति । सर्वोपपत्तिसंवर्तनीयेषु च कर्मसु 5 सर्वोपपत्त्यायतनेषु चास्य कामकारोपपत्तिता भवति । यथेप्सितं च सर्वबोधिकार्यं करोति । सर्वप्रणिधानानि चास्य यथाकामं समृध्यन्ति । यद्यदेव वस्तु यथाधिमुच्यते, तत्तथैव भवति नान्यथा । यद्यज्ज्ञेयं ज्ञातुकामो भवति, तदपि जानीते यथावत् । नामकायपदकायव्यञ्जनकायानां च निकामलाभी भवति सर्वधर्मसम्यग्व्यवस्थानकुशलः । एवं वशिताप्राप्तस्यास्य बोधिसत्त्वस्य अतः परेण वशिताप्राप्तिकृतानुशंसा विस्तरेण यथासूत्रमेव वेदि-10 तव्याः । औदारिकं च बुद्धदर्शनं विहाय सततसमितमविरहितो भवति बुद्धदर्शनेन । शेषकुशलमूलविशुद्धिर्यथासूत्रं वेदितव्या सह सुवर्णदृष्टान्तेन । उपपत्तिः प्रभावविशेषश्चास्य बोधिसत्त्वस्य अस्मिन् विहारे यथासूत्रमेव वेदितव्यः । अयमनाभोगो निर्निमित्तो विहारः । परमार्थावतारज्ञाननिष्पत्तितश्च अनुत्पत्तिकधर्मक्षान्तिलाभतश्च सर्वापक्षालापगतगम्भीरबोधिसत्त्वविहारप्राप्तितश्च धर्ममुखस्रोतसि बुद्धैरप्रमेयाभिनिर्हारसुखज्ञानाभिज्ञाकर्मोपसं-15 हारतश्च अप्रमाणकायविभक्तिज्ञानप्रवेशतश्च वशिताप्राप्तितश्च वशितानुशंसाप्रत्यनुभवनतश्च । तद्यथा अचलायां भूमौ पूर्वकाभिसंस्कारापगमादनाभोगं निश्चलवाहिमार्गसमारूढं तच्चित्तं तस्यां भूमौ प्रवर्तते, तस्मात्सा भूमिरचलेत्युच्यते । तेनैव चार्थेनायं विहारो द्रष्टव्यः ॥

तत्र कतमो बोधिसत्त्वानां प्रतिसंविद्विहारः? इह बोधिसत्त्वस्तेनापि विहारेण गम्भीरेण असंतुष्टः उत्तरिज्ञानविशेषतामनुगच्छन् यैश्च धर्मज्ञानाभिसंस्कारैः परेषां धर्मः सर्वाकारो 20 बोधिसत्त्वेन देशयितव्यः, यच्च धर्माख्यानकृत्यम्, तत्सर्वं यथाभूतं प्रजानाति । तत्रेदं धर्मसमाख्यानकृत्यम्—गहनोपचारेषु ये च संक्लिश्यन्ते विशुद्ध्यन्ते च, येन च संक्लिश्यन्ते येन च विशुद्ध्यन्ते, यच्च संक्लेशव्यवदानम्, या च तस्यानैकान्तिकता, या च तस्यैकान्तानैकान्तिकता, तस्य यथाभूतं ज्ञानम् । एवं च धर्मदेशनाकुशलस्य देशनाकृत्यकुशलस्य च यत्सर्वाकारमहाधर्मभाणकत्वमप्रमेयधारणीप्राप्तस्य सर्वस्वराङ्गविभक्तिकुशलस्याक्षयप्रति-25 भानस्य यादृश्या धर्मधारणोद्ग्रहणशक्त्या समन्वागतस्य यया बोधिसत्त्वप्रतिसंविदभिनिर्हृतया वाचा यादृशे धर्मासने निषण्णस्य यत्र येषु च धर्मं देशयतो यावद्भिर्मुखैर्यया सत्त्वविज्ञापनसंतोषणकृत्यसंनियोजनशक्त्या समन्वागतस्य, तत्सर्वं यथासूत्रमेव विस्तरनिर्देशतो वेदितव्यम् । कुशलमूलविशुद्ध्युपपत्तिप्रभावविशेषोऽपि यथासूत्रमेव वेदितव्यः । अयं बोधिसत्त्वानां प्रतिसंविद्विहारः । शान्तविमोक्षासंतुष्टिप्रवेशतश्च धर्मसमाख्यानाभिसंस्कार-30 ज्ञानतश्च अचिन्त्यमहाधर्मभाणकत्वप्रतिलम्भतश्च···तद्यथा साधुमत्यां भूमौ । सर्वसत्त्वानां हितसुखाय परिशुद्धया बोधिसत्त्वप्रतिसंविन्मतया धर्मसमाख्यानाधिकारत्वात् सा भूमिः साधुमतीत्युच्यते । तेनैवार्थेनायं विहारो द्रष्टव्यः ॥

तत्र कतमो बोधिसत्त्वानां परमो विहारः? इह बोधिसत्त्वस्य प्रतिसंविद्विहारे सर्वाकारपरिशुद्धे धर्मराजत्वार्हस्य धर्माभिषेकसमासन्नस्य विमलादिसमाध्यप्रमेयप्रतिलम्भकरणतः सर्वज्ञानविशेषाभिषेकपश्चिमसमाधिसंमुखीभावाच्च सर्वबुद्धेभ्यस्तदनुरूपासनकायपरिवारप्रतिलाभिनः स्वरश्मिगमनप्रत्यागमनतः सर्वाकारसर्वज्ञज्ञानाभिषेकप्रतिलम्भतश्च अभिषिक्तस्य च सर्वविनेयसमुदानयनतद्विमोक्षोपायबुद्धकृत्यज्ञानतश्च अप्रमेयविमोक्षधारण्यभिज्ञा- 5 प्रतिलम्भतश्च तदधिपतेयमहास्मृतिज्ञानाभिनिर्हारनिर्वचनव्यवस्थानतश्च महाभिज्ञाभिनिर्हारतश्च कुशलमूलविशुद्ध्युपपत्तिप्रभावविशेषतश्च····तद्यथा धर्ममेघायां बोधिसत्त्वभूमौ । परिपूर्णबोधिसत्त्वमार्गः सुपरिपूर्णबोधिसंभारश्च स बोधिसत्त्वस्तथागतानामन्तिकाद्धर्ममेघभूतामत्युदारां दुःसहां तदन्यैः सर्वसत्त्वैः सद्धर्मवृष्टिं संप्रतीच्छति । धर्ममेघभूतश्च स्वयमनभिसंबुद्धबोधिरभिसंबुद्धबोधिश्च अप्रमेयाणां सत्त्वानां सद्धर्मवृष्ट्या निरुपमया क्लेशरजांसि 10 प्रशमयति, विचित्राणि च कुशलमूलसस्यानि विरोहयति, विवर्धयति पाचयति च [ तस्यां भूमावस्थितः ] । तस्मात्सा भूमिर्धर्ममेघेत्युच्यते । तेनैव चार्थेन परमो विहारो द्रष्टव्यः ॥

न च यान्युत्तरोत्तरेषु विहारेष्वङ्गानि निर्दिष्टानि पूर्वकेषु विहारेषु सर्वेण सर्वं न संविद्यन्ते । अपि तु मृदुत्वान्न संख्यां गच्छन्ति । तेषामेव मध्याधिमात्रत्वात्तदन्योत्तरभूमिप्रतिलम्भनिष्पत्तिव्यवस्थानं वेदितव्यम् । एकैकश्चात्र विहारोऽनेकैर्महाकल्पकोटी- 15 शतसहस्रैस्ततो वा प्रभूततरैः प्रतिलभ्यते निष्पद्यते च । ते तु सर्वे विहारास्त्रिभिर्महाकल्पासंख्येयैः समुदागच्छन्ति । महाकल्पासंख्येयेन अधिमुक्तिचर्याविहारं समतिक्रम्य प्रमुदितविहारो लभ्यते । तं च व्यायच्छमानः प्रौढ्येन नाव्यायच्छमानः । द्वितीयेन महाकल्पासंख्येयेन प्रमुदितविहारं यावत्साभोगं निर्निमित्तं विहारमतिक्रम्य अनाभोगं निर्निमित्तं प्रतिलभते । तं च नियतमेव । तथा हि स शुद्धाशयो बोधिसत्त्वो नियतं 20 व्यायच्छते । तृतीयेन महाकल्पासंख्येयेन अनाभोगं च निर्निमित्तं प्रतिसंविद्विहारं समतिक्रम्य परमं बोधिसत्त्वविहारं प्रतिलभते । तत्र द्वौ कल्पासंख्येयौ वेदितव्यौ । योऽपि कल्पः, सोऽपि रात्रिंदिवसमासार्धमासगणनायोगेन कालाप्रमेयत्वादसंख्येय इत्युच्यते । योऽपि तेषामेव महाकल्पानां गणनायोगेन सर्वगणनासमतिक्रान्ता संख्या, सोऽप्यसंख्येयः । पूर्वकेण कल्पासंख्येयेन बोधिरकल्पैः कल्पासंख्येयैरधिगम्यते । पश्चिमकेन पुनः कल्पासंख्येयेन 25 त्रिभिरेव, नाधिकैः । यस्त्वधिमात्रेण वीर्यारम्भेण प्रयुज्यते, तत्र कश्चिदन्तरकल्पान् प्रभूतान् व्यावर्तयति, कश्चिद्यावन्महाकल्पान्, न त्वसंख्येयव्यावृत्तिः कस्यचिदस्तीति वेदितव्यम् । एभिश्च द्वादशभिर्बोधिसत्त्वविहारैस्त्रिभिरसंख्येयैः क्लेशावरणपक्ष्यं च दौष्ठुल्यं प्रहीयते, ज्ञेयावरणपक्ष्यं च । तत्र त्रिषु विहारेषु क्लेशावरणपक्ष्यस्य दौष्ठुल्यप्रहाणं वेदितव्यम् । प्रमुदिते विहारे आपायिकक्लेशपक्ष्यस्य सर्वेण सर्वं ( दौष्ठुल्यस्य प्रहाणम् । ) समुदा- 30 चारतस्त्वधिमात्रमध्यस्य सर्वक्लेशपक्षस्य । अनाभोगे निर्निमित्ते विहारेऽनुत्पत्तिकधर्मक्षान्तिविशुद्धिविबन्धक्लेशपक्ष्यस्य सर्वेण सर्वं दौष्ठुल्यस्य प्रहाणं वेदितव्यम्, समुदाचारतस्तु

सर्वक्लेशानाम्। परमे पुनर्विहारे सर्वक्लेशसवासनानुशयावरणप्रहाणं वेदितव्यम्। तच्च ताथागतं विहारमनुप्रविष्टः। ज्ञेयावरणपक्ष्यमपि दौष्ठुल्यं त्रिविधं वेदितव्यं त्वग्गतं फल्गुगतं सारगतं च। तत्र त्वग्गतस्य प्रमुदिते विहारे प्रहाणं भवति, फल्गुगतस्यानाभोगे निर्निमित्ते, सारगतस्य ताथागते विहारे प्रहाणं भवति सर्वावरणविशुद्धिज्ञानता च। तेषु च त्रिषु
5 विहारेषु तस्य क्लेशज्ञेयावरणविशुद्धिज्ञानता च। तेषु च त्रिषु विहारेषु तस्य क्लेशज्ञेयावरण-प्रहाणस्य तदन्ये विहारा यथाक्रमं संभारभूता भवन्ति। एषु त्रयोदशसु विहारेषु समासत एकादशविधा विशुद्धिर्वेदितव्या। प्रथमे गोत्रविशुद्धिः। द्वितीये शुद्धाधिमुक्तिविशुद्धिः। तृतीयेऽध्याशयविशुद्धिः। चतुर्थे शीलविशुद्धिः। पञ्चमे चित्तविशुद्धिः। षष्ठे सप्तमेऽष्टमे च सम्यग्ज्ञानसमारम्भविशुद्धिः। नवमे प्रायोगिकचर्यापरिपूरिविशुद्धिः। दशमे तत्त्वज्ञाना-
10 भिज्ञाभिनिर्हारविशुद्धिः। एकादशे तदर्थे सम्यक्परसमाख्यानाय प्रतिसंविद्विशुद्धिः। द्वादशे सर्वाकारसर्वज्ञेयानुप्रवेशज्ञानविशुद्धिः। त्रयोदशे ताथागते विहारे सवासनासर्वज्ञेयक्लेशावरण-विशुद्धिः। अष्टाभिश्च पूर्वनिर्दिष्टैर्महायानसंग्राहकैर्धर्मैरेषां त्रयोदशानां विहाराणां संग्रहो वेदितव्यः। प्रथमद्वितीययोर्विहारयोः श्रद्धाजातस्याधिमुक्तिगतस्य बोधिसत्त्वपिटकश्रवण-चित्तता। तृतीये विहारेऽध्याशयोपगमनं भावनाकारप्रतिलम्भपूर्वकम्। तदन्येषु विहारेषु
15 यावत्साभोगनिर्निमित्तं भावनाबाहुल्यम्। ततश्चोर्ध्वं त्रिषु बोधिसत्त्वविहारेषु परिशुद्धचर्या-संगृहीतेषु भावनाफलपरिनिष्पत्तिः। ताथागते विहारेऽत्यन्तनैर्याणिकता वेदितव्या॥

श्रावकविहारसाधर्म्येण चैषां द्वादशानां बोधिसत्त्वविहाराणामनुक्रमो वेदितव्यः। यथा श्रावकस्य स्वगोत्रविहारः, तथास्य प्रथमो वेदितव्यः। यथा तस्य सम्यक्त्वन्यामावक्रान्ति-प्रयोगविहारः, [स] एवास्य द्वितीयः। यथा तस्य न्यामावक्रान्तिविहारः, तथास्य तृतीयो
20 विहारः। यथा तस्य अवेत्यप्रसादलाभिन आर्यकान्ताधिशीलविहारः उत्तर्यास्रवक्षयाय, तथास्य चतुर्थो विहारः। यथा तस्याधिशीलं निश्रित्य अधिचित्तशिक्षानिर्हारविहारः, तथास्य पञ्चमो विहारः। यथा तस्य यथालब्धसत्यज्ञानाधिप्रज्ञाशिक्षाविहारः तथास्य षष्ठसप्तमाष्टमा विहारा वेदितव्याः। यथा तस्य सुविचारितज्ञेयस्यानिमित्तसमाधिप्रयोगविहारः, तथास्य नवमो विहारः। यथा तस्य परिनिष्पन्नोऽनिमित्तविहारः, तथास्य दशमो विहारः।
25 यथा तस्य व्युत्थितस्य विमुक्त्यायतनविहारः, तथास्यैकादशो विहारः। यथास्य सर्वाकारो-ऽर्हत्त्वविहारः, तथास्य द्वादशो विहारो वेदितव्यः॥

बोधिसत्त्वभूमावाधारानुधर्मे योगस्थाने विहारपटलं चतुर्थम्॥

॥ द्वितीयं योगस्थानम्॥

# भूमिपटलम् ।

## ( गुणवर्ममतेन निष्ठापटलम् । )

एषु यथावर्णितेषु त्रयोदशसु विहारेष्वनुगताः सप्त भूमयो वेदितव्याः । षड् बोधिसत्त्वभूमयः । एका व्यामिश्रा बोधिसत्त्वताथागता भूमिः । गोत्रभूमिः, अधिमुक्तिचर्याभूमिः, शुद्धाशयभूमिः, चर्याप्रतिपत्तिभूमिः, नियता भूमिः, नियतचर्याभूमिः, 5 निष्ठागमनभूमिश्च । इतीमाः सप्त बोधिसत्त्वभूमयः । आसां पश्चिमा व्यामिश्रा । तत्र गोत्रविहारोऽधिमुक्तिचर्याविहारश्च द्वे भूमी । प्रमुदितो विहारः शुद्धाध्याशयभूमिः । अधिशीलाधिचित्तविहारास्त्रयश्चाधिप्रज्ञविहाराः साभोगश्च निर्निमित्तो विहारश्चर्याप्रतिपत्तिभूमिः । अनाभोगनिर्निमित्तो विहारो नियता भूमिः । तस्यां भूमौ बोधिसत्त्वस्तृतीयनियतिपातपतितो भवति । प्रतिसंविद्विहारो नियतचर्याभूमिः । परमो विहारस्ताथागतश्च निष्ठागमनभूमिः । ताथा- 10 गतस्य पुनर्विहारस्य भूमेश्च पश्चान्निर्देशो भवति बुद्धधर्मप्रतिष्ठापटले । तत्र बोधिसत्त्वोऽधिमुक्तिचर्याभूमेः शुद्धाध्याशयभूमिमनुप्रविशन् कथमपायान् समतिक्रामति ? इह बोधिसत्त्वो लौकिकं परिशुद्धं ध्यानं निश्रित्य अधिमुक्तिचर्याभूमौ सुसंभृतबोधिसंभारो दशशतेन पूर्वनिर्दिष्टेनाकारेण सत्त्वेष्वनुकम्पां भावयति अनन्यमनसिकारः । स भावनान्वयात्तद्रूपं सत्त्वेष्वनुकम्पाशयकरुणाशयं प्रतिलभते, येनापायान् सत्त्वानामर्थेऽगारावासयोगेनाधि- 15 तिष्ठति । यदि मे एष्वेव संनिवासतोऽनुत्तरा सम्यक्संबोधिः समुदागच्छति, तथाप्यहमुत्सहामीति । सत्त्वानां दुःखापनयनहेतोः सर्वं च सत्त्वानामापायिकं कर्म तेन शुद्धेनाशयेन आत्मवैपाक्यमिच्छति । अत्यन्तसर्वाकुशलकर्मासमुदाचाराय मानसं प्रणिधत्ते । तस्य तथा परिभावितं तल्लौकिकं परिशुद्धं ध्यानमापायिकक्लेशपक्ष्यं दौष्ठुल्यमाश्रयादपकर्षति । अचिरेण तस्य प्रहाणादाश्रयोऽस्य बोधिसत्त्वस्य परिवर्तते पापकस्यापायिकस्य कर्मणोऽत्यन्त- 20 मकरणतायै अपायागमनतायै च । इयता स बोधिसत्त्वः समतिक्रान्तोऽपायगतीः सर्वा भवति, समतिक्रान्तश्च अधिमुक्तिचर्याभूमिम्, प्रविष्टश्च शुद्धाशयभूमिम् । ये च ते दश धर्मा विहारपटले निर्दिष्टाः श्रद्धादयो विहारशोधनाः, ते इह भूमिविशोधना वेदितव्याः । तेषां विपक्षप्रतिपक्षतो व्यवस्थानं वेदितव्यम् । समासार्थोऽनुक्रमश्च वेदितव्यः । तत्र दश ते धर्मा दशानां भूमिविशोधनानां धर्माणां विपक्षभूता धर्माः, येषां प्रतिपक्षेण 25 एषां व्यवस्थानं भवति । कतमे दश ? सर्वेण सर्वमनारम्भचित्तोत्पादनाबोधिसत्त्वशिक्षापदासमादानम् । अयं श्रद्धाविपक्षो धर्मो यस्य प्रतिपक्षेण श्रद्धा । सत्त्वेषु विहिंसाचित्तं करुणाविपक्षो धर्मो यस्य प्रतिपक्षेण करुणा । सत्त्वेषु व्यापादो मैत्रीविपक्षो धर्मो यस्य प्रतिपक्षेण मैत्री । भोगजीवितापेक्षा दानविपक्षो धर्मो यस्य प्रतिपक्षेण त्यागः । सत्त्वेभ्योऽपकारविप्रतिपत्तिलाभो बहुकर्तव्यता च अखेदविपक्षो धर्मो 30 यस्य प्रतिपक्षेण अखेदता । अनुपायप्रयोगः शास्त्रज्ञताविपक्षो धर्मो यस्य प्रतिपक्षेण शास्त्रज्ञता । असौरत्यापरचित्तानुवर्तनता लोकज्ञताविपक्षो धर्मो यस्य प्रतिपक्षेण लोकज्ञता ।

कुशलधर्मभावनायां प्रमादकौसीद्यं ह्रीक्यापत्राप्यविपक्षो धर्मो यस्य प्रतिपक्षेण ह्रीक्यापत्राप्यता । दीर्घकालिकैश्चित्रैस्तीव्रैर्निरन्तरैः संसारदुःखैर्व्यवदीर्णता धृतिबलाधानताविपक्षो धर्मो यस्य प्रतिपक्षेण धृतिबलाधानता । शास्तरि काङ्क्षा विमतिर्विचिकित्सा तथागतपूजोपस्थानताया विपक्षो धर्मो यस्य प्रतिपक्षेण तथागतपूजोपस्थानता । एवं तावदेषां विपक्षप्रतिपक्षव्यवस्थानं 5 भवति । कः पुनरेषां समासार्थः ? समासेन दशभिरेभिर्धर्मैराशयशुद्धिः प्रयोगशुद्धिश्च परिदीपिता । तत्र त्रिभिः पूर्वकैराशयशुद्धिः, अवशिष्टैः प्रयोगशुद्धिर्वेदितव्या ॥

बोधिमभिश्रद्दधन् बोधिसत्त्वः सत्त्वान् दुःखितान् करुणायते, करुणायमानो मयैते परित्रातव्या इति मैत्राय( न् ) तथा मैत्रचित्तस्य सर्वपरित्यागी भवति, एष भोगजीवित-निरपेक्षः । निरपेक्षस्यैषामर्थे प्रयुज्यमानो ( न ? ) परिखिद्यते । अपरिखिन्नश्च शास्त्रज्ञो 10 भवति । शास्त्रज्ञश्च यथा लोके प्रवर्तितव्यमनेन तथा जानाति । एवं लोकज्ञो भवति । स्वयं च क्लेशसमुदाचारेण जेह्रीयते व्यपत्रपते । ह्रीमानपत्रापी च क्लेशवशगो धृतिबलाधानप्राप्तो भवति । धृतिबलाधानप्राप्तश्च सम्यक्प्रयोगादपरिहीयमाणः कुशलैर्धर्मैर्विवर्धमानः प्रतिपत्ति-पूजया लाभसत्कारपूजया च तथागतपूजोपस्थानं करोति । इत्ययमेषां दशानां धर्माणामनु-समुदागमो वेदितव्यः । एभिश्च दशभिर्धर्मैः सर्वभूमिविशोधना भवति ॥

15 आधारे योगस्थाने तृतीयं भूमिपटलम् ॥

# चतुर्थं परिशिष्टम्।

## श्लोकसूची।

### (१) गद्यविभागगाथासूची।



### (२) पद्यविभागगाथासूची।

———:o:———

## बौद्धसंस्कृतग्रन्थमालायां प्रकाश्यत्वेन संकल्पिता ग्रन्थाः ।

### १ नव धर्माः

१ ललितविस्तरः Rs. 10.00 and 12.50

२ समाधिराजसूत्रम् ( यन्त्रस्थम् )

३ लङ्कावतारसूत्रम्

४ अष्टसाहस्रिका प्रज्ञापारमिता आलोकव्याख्यासहिता Rs. 20.00 and 25.00

५ गण्डव्यूहसूत्रम् ( यन्त्रस्थम् )

६ सद्धर्मपुण्डरीकसूत्रम् Rs. 10.00 and 12.50

७ दशभूमिकसूत्रम् Rs. 10.00 and 12.50

८ सुवर्णप्रभाससूत्रम् Rs. 10.00 and 12.50

९ तथागतगुह्यकम्

### २ माध्यमिकमते–

१० मध्यमकशास्त्रं नागार्जुनीयम्, आचार्यचन्द्रकीर्तिविरचितया प्रसन्नपदाख्य-व्याख्यया संवलितम् Rs. 10.00 and 12.50

११ शिक्षासमुच्चयः शान्तिदेवविरचितः Rs. 10.00 and 12.50

१२ बोधिचर्यावतारः शान्तिदेवविरचितः प्रज्ञाकरमतिविरचितया पञ्जिकाख्य-व्याख्यया संवलितः Rs. 10.00 and 12.50

### ३ योगाचारमते–

१३ सूत्रालंकारः आचार्यासङ्गविरचितः

### ४ विनयाः

१४-१५ महावस्तु–लोकोत्तरवादिनां विनयः

१६ मूलसर्वास्तिवादिनां विनयः ( Gilgit Mss. )

### ५ महायानसूत्रसंग्रहः

१७ प्रथमः खण्डः–सुविक्रान्तविक्रामिप्रज्ञापारमिता, वज्रच्छेदिका, सुखावतीव्यूहः, कारण्डव्यूहः, राष्ट्रपालपरिपृच्छा, अर्थविनिश्चयसूत्रं च

१८ द्वितीयः खण्डः–शालिस्तम्बसूत्रम्, प्रतीत्यसमुत्पादसूत्रम्, भैषज्यगुरुवैदूर्य-प्रभसूत्रम्, अन्येषां च सूत्राणां संग्रहः

६ अवदानसंग्रहः

१९ अवदानशतकम् ( प्रकाशितम् ) Rs. 10.00 and 12.50

२० दिव्यावदानम् ( प्रकाशितम् ) Rs. 16.00 and 20.00

२१ जातकमाला ( बोधिसत्त्वावदानमाला ) सुभाषितरत्नकरण्डककथा च, आर्यशूरविरचिता ( प्रकाशिता ) Rs. 10.00 and 12.50

२२-२३ अवदानकल्पलता क्षेमेन्द्रविरचिता ( प्रकाशिता ) Rs. 20.00 and 25.00

७ प्रकीर्णग्रन्थाः

२४ महायानस्तोत्रसंग्रहः

२५ अश्वघोषग्रन्थाः—बुद्धचरितम्, सौन्दरनन्दम्